श्री जिनदत्तसूरि प्राचीनपुस्तकोद्धार फण्ड.

ग्रन्थाङ्क· ३८

॥ अर्हम् ॥

जैनाचार्यश्रीमज्जिनकृपाचन्द्रसूरीश्वराणा शिष्येण

प्रवर्त्तक—मुनि सुखसागरेण संगृहीतः

# सुभाषित—संग्रहः

कोटानिवासी दीवानबहादूर शेठ केशरीसिंहजी
बुद्धिसिंहजी बाफना द्रव्यसाहाय्येन

प्रकाशक·

जिनदत्तसूरि ज्ञानभण्डार–सुरत.

प्रति ५००

# श्रीमद् जङ्गम युगप्रधान भट्टारक खरतरगच्छाधीश्वर श्री कृपाचन्द्रसूरीश्वराणाम्

## अष्टकम्.



शार्दूलविक्रीडितम्

श्रीमन्तः श्रुतदर्शनावनपराश्चारित्रमुख्यव्रता ।
स्वस्याचार्यपरंपरागतमहागच्छाग्र्यपीठेश्वराः ॥
धर्मोद्धारमहाव्रतस्य विधिवत् संपादने तत्पराः ।
जीयासुर्गणपालका जिनकृपाश्चन्द्राख्यसूरीश्वराः ॥ १ ॥

नानाशास्त्रविचारनिर्णयविधौ तत्त्वार्थसंपादकाः ।
सद्धर्माचरणप्रचारणपरा वाणीश्वरस्पर्धिनः ।
सम्यक्त्वैकपथानुगाः पटुतमस्फुर्जन्मतिप्रक्रमाः ।
जीयासुर्गणपालका जिनकृपाश्चन्द्राख्यसूरीश्वराः ॥ २ ॥

यैः स्वीयैः प्रखरप्रतापदहनैर्दग्धात्मीयान्तरारिपून् ।
जैनेषु कृतकृत्यतां खरतरे त्युच्चपदं प्रापित ॥
सद्रत्नत्रिकपालनाय सततं बद्धोद्यमाः सर्वतः ।
जीयासुर्गणपालका जिनकृपाश्चन्द्राख्यसूरीश्वराः ॥ ३ ॥

शिखरणीवृत्तम्

श्रिया सेव्यो मुक्त्यै सुरनरफणीन्द्रैश्च मुनिभिः ।
धिया ध्येयो धर्मे सुरगुरुसमानैश्च कविभिः ॥

भिया हेयोऽजस्रं भवमलमलिष्टै र्कुमतिभिः ।
क्रियानिष्ठः सोऽव्याद् भुवि जिनकृपाचन्द्रयतिराट् ॥४ ।

अपाकर्तुं दोषान् निखिलजनगान् दोपजनकान् ।
भ्रमद् ग्रामाद् ग्रामं जिनसदुपदेशाननुपादिशन् ॥
सुशिष्यान् सच्छ्राद्धान् विनयरसपात्रांश्च विदधत् ।
कृपाचन्द्राचार्यो जगति यतिसूर्यो विजयताम् ॥ ५ ॥

मलिष्ठान् मिथ्यात्वाग्रहमतविलीनान् जनगणान् ।
मलैर्हीनान् कुर्वन् श्रुतपदसुधास्नानकरणैः ॥
पृथिव्यां चारित्र्यं श्रुतगणमयोदर्शन भवन् ।
कृपाचन्द्राचार्यो जगति यतिसूर्यो विजयताम् ६ ॥

स्रग्धरावृत्तम्

श्रीम(मा)न्मान्यो वदान्यो जनहितनिरतो विश्रुतो वन्द्यमानः ।
प्रीत्या सत्योपदेशैः श्रुतचरणपरैः प्राणिभिर्नन्द्यमानः ॥
आचार्याचार्यमुख्यः खरतरगणपः श्रीकृपाचन्द्रसूरिः ।
पाखण्डान् खण्डयन् स स्वमतिततिबलैः पातु नः पूज्यपादः ७

पुष्पिताग्रा

अधिभुवि जयतात्प्रवर्तकश्रीमुनिसुखसागरमोक्षमंत्रदाता ।
खरतरगणपः कृपादिचन्द्रो मुनिवरमंडलमानितः स सूरिः ॥८॥



## दिवान बहादुर शेठ केसरीसिंहजी साहब

कोटा—रतलामवाले



Banker & Honorary Government Treasurer
Kota (Rajputana)

॥ अर्हम् ॥

# ॥ सुभाषित संग्रह ॥



धर्माराधन का फल।

यत्कल्याणकरोऽवतारसमयः स्वप्नानि जन्मोत्सवो।
यद्रत्नादिकवृष्टिरिन्द्रविहिता यद्रूपराज्यश्रियः॥
यद्दानं व्रतसंपदुज्ज्वलतरा यत्केवलश्रीर्नवा।
यद्रम्यातिशया जिने तदखिल धर्मस्य विस्फुर्जितम्॥१॥

तीर्थंकरो की राज्यलक्ष्मी।

संती कुंथू अ अरो, अरिहंता चेव चक्कवट्टी अ।
अवसेसा तित्थयरा, मंडलिया आसि रायाणो॥२॥

धर्म से सात प्रकार की वृद्धि होती है।

आयुर्वृद्धिर्यशोवृद्धि-र्वृद्धिः प्रज्ञासुखश्रिया।
धर्मसंतानवृद्धिश्च, धर्मात्सप्ताऽपि वृद्धयः॥ ३॥

बीज से बीज होता है। धर्मवृद्धि।

बीजेनैव भवेद्बीज, प्रदीपेन प्रदीपकः।
द्रव्येणैव भवेद् द्रव्यं, भवेनैव भवांतरः॥ ४॥

धर्म से संतानवृद्धि ।

वालाण रवो तुरियाण, हिंसणं वंदित्रिन्दनिग्घोसो ।
गुरुओ मंथासद्दो, धन्नाण घरे समुच्छलइ ॥ ५ ॥
वरवालामुहकमलं, वालमुहं धूलिधूसरच्छायं ।
सामिमुहं सुपसन्नं, तिन्नि वि सग्गं विमेसंति ॥ ६ ॥

प्रस्थान समय यह मंगलिक के लीए होते हैं ।

कन्यागोपूर्णकुंभं दधिमधुकुसुमं पात्रकं दीप्यमानं ।
यानं वा गोप्रयुक्तं करिनृपतिरथः(थं) शंखवाद्यध्वनिर्वा ॥
उत्क्षिप्ता चैव भूमी जलचरमिथुनं सिद्धमन्नं यतिर्वा ।
वेश्यास्त्रीमद्यमांसं जनयति सततं मंगलं प्रस्थितानां ॥७॥

श्रमणस्तुरगो राजा, मयूरः कुञ्जरो वृषः ।
प्रस्थाने वा प्रवेशे वा, सर्वसिद्धिकरा मताः ॥ ८ ॥

भोजराजा के लिये मंत्रीयों का विलाप ।

अद्य धारा निराधारा, निरालम्बा सरस्वती ।
पण्डिता रण्डिताः सर्वे, त्वयि भोज दिवं गते ॥ ९ ॥

दया रहित को दीक्षादि नकामी है ।

न सा दीक्षा न सा भिक्षा, न तद्दानं न तत्तपः ।
न तद्ध्यानं न तन्मौनं, दया यत्र न विद्यते ॥ १० ॥

योगीश्रेष्ठ स्थूलीभद्र अथवा सब से बडा दानी, मानी, भोगी और योगी यह है ।

श्रीशान्तिनाथादपरो न दानी, दशार्णभद्रादपरो न मानी।
श्रीशालिभद्रादपरो न भोगी, श्रीस्थूलभद्रादपरो न योगी।११।

बुद्धि आदि का सार क्या है ?

बुद्धेः फलं तत्त्वविचारणं च, देहस्य सारं व्रतधारणं च।
अर्थस्य सारं किल पात्रदानं, वाचः फलं प्रीतिकरं नराणाम्

भ्रमर की माफक सब से सार लेना चाहीए।

पट्पदः पुष्पमध्यस्थो, यथा सारं समुद्धरेत्।
तथा सर्वेषु कार्येषु, सारं गृह्णाति बुद्धिमान् ॥१३॥

बहोत धनवाले की दसा बुरी है।

दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो।
गृह्णन्ति च्छलमाकलय्य हुतभुग् भस्मीकरोति क्षणात्॥
अम्भः प्लावयति क्षितौ विनिहितं यक्षा हरन्ति हठाद्।
दुर्वृत्तास्तनया नयन्ति निधनं धिग्बह्वधीनं धनम् ॥१४॥

वस्तुपाल तेजपाल के धन का सद्व्यय।

जैनागारसहस्रपञ्चकमतिस्फारं सपादाधिकं।
लक्षं श्रीजिनमूर्तयस्तु निहिताः प्रोत्तुगमाहेश्वरा॥
प्रासादाः पृथिवीतले ध्वजयुताः सार्धं सहस्रद्वयं।
प्राकाराः परिकल्पिता निजधनैर्द्वात्रिंशदत्र ध्रुवम् ॥१५॥

सत्रागारशतानि सप्त विमला वाप्यश्चतुःषष्टयः।
उच्चैः पौषधमन्दिराणि प्रवरा जैनाश्च शैवा मठाः॥

विद्यायाश्च तथैव पञ्चशतिकाः प्रत्येकतः प्रत्यहं ।
पञ्चत्रिंशशतानि जैनमुनयो गृह्णन्ति भोज्यादिकम् ॥१६॥

देह का सार क्या है ?

क्षीराब्धेरमृतं धने वितरणं वाणीविलासेऽनृतं ।
देहेऽन्योपकृतिस्तरौ शुभफलं वंशे च मुक्ताफलं ॥
मृत्स्नायां कनकं सुमे परिमलः पङ्के पयोजं यथा ।
संसारे पुरुषायुषं निगदितं सारं तथा कोविदैः ॥ १७ ॥

देह की अनित्यता ।

मातापितृसहस्राणि, पुत्रदारशतानि च ।
युगे युगे व्यतीतानि, कस्याहं कस्य बान्धवाः ? ॥१८॥

शालिभद्र का महान् आश्चर्य ।

पूर्वं न मंत्रो न तदा विचारः, स्पर्धा न केनापि फले न वाञ्छा ।
पश्चानुतापोऽनुशयो न गर्वो, हर्षस्तथा संगमके बभूव ॥१६॥

पुण्यहीन के मनोरथ सिद्ध नहीं होते ।

वनकुसुमं कृपणश्रीः, कूपच्छायासुरंगधूली च ।
तत्रैव यान्ति विलयं, मनोरथा भाग्यहीनानाम् ॥२०॥

पुन्यशाली का कर्तव्य ।

'शिष्टे संगः श्रुतौ रंगः, सद्ध्याने धीर्धृतौ मतिः ।
दाने शक्तिर्गुरौ भक्तिः, षडेते सुकृताकराः ॥ २१ ॥

संगति का माहात्म्य ।

पश्य संगस्य माहात्म्य, स्पर्शपाषाणयोगतः ।
लोहं स्वर्णीभवेत् स्वर्ण,–योगात्काचो मणीयते ॥२२॥

संसर्ग से दोष और गुण आते है ।

गवाशनानां स वचः शृणोति,अहं च राजन् मुनिपुंगवानाम् ।
प्रत्यक्षमेतद्भवतापि दृष्ट, संसर्गजा दोषगुणा भवन्ति ॥२३॥

मन ही मोक्ष को बन्ध को प्राप्त करता है ।

मन एव मनुष्याणां, कारणं बन्धमोक्षयोः ।
बन्धस्तु(स्य) विषयासंगे(गो), मुक्तेर्निर्विषयं मनः॥२४॥
मणमरणे इ(णिं)दियमरणं, इंदियमरणे मरंति कम्माइं ।
कम्ममरणेण मुक्खो, तम्हा मणमारणं विंति ॥ २५ ॥

हस्तादि दानादि से शोभते है ।

दानेन पाणिर्न तु कंकणेन, मानेन तृप्तिर्न तु भोजनेन ।
धनेन कान्तिर्न तु चन्दनेन, ध्यानेन मुक्तिर्न तु दर्शनेन ॥२६॥

सूत का धन अच्छा नहीं है ।

दुर्भिक्षोदयमन्नसंग्रहपरः पत्युर्वधं बन्धकी ।
ध्यायत्यर्थपतेर्भिषग्गदगणोत्पातं कलिं नारदः ॥
दोषग्राही जनश्च पश्यति परच्छिद्रं छलं राक्षसी ।
निःपुत्रं म्रियमाणमाढ्यमवनीपालो हहा वाञ्छति ॥२७॥

दान कहीं भी नकमा नहीं होता ।

पात्रे धर्मनिबन्धनं तदपरे प्रोद्यद्दयाख्यापकं ।
मित्रे प्रीतिविवर्धकं रिपुजने वैरापहारक्षमं ॥
भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं ।
भट्टादौ च यशस्करं वितरणं न क्वाप्यहो निष्फलम् ॥२८॥

गुरुभक्ति विना सब निष्फल है ।

विना गुरुभ्यो गुणनीरधिभ्यो, जानाति धर्मं न विचक्षणोऽपि।
यथार्थसार्थं गुरुलोचनोऽपि, दीपं विना पश्यति नांधकारे।२९।

जैसी भावना वैसी सिद्धि ।

मन्त्रे देवे गुरौ तीर्थे दैवज्ञे स्वप्नभेषजे ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ३० ॥

असार से सार लेना चाहिए ।

दानं वित्तादृतं वाचः, कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायाद,-सारात्सारमुद्धरेत् ॥ ३१ ॥

लक्ष्म्यादि पाणी के फेन समान है ।

कल्लोलचपला लक्ष्मीः, संगमाः स्वप्नसन्निभाः ।
वात्याव्यतिकरोत्क्षिप्त,-तूलतुल्यं च यौवनम् ॥ ३२ ॥

कृपण का धन निष्फल होता है ।

शास्त्रैर्निःप्रतिभस्य किं गतदृशो दीप्रैः प्रदीपैश्च किं ।
किं क्लीबस्य वधूजनैः प्रहरणैः किं कातरस्योल्बणैः ॥

किं वाद्यैर्बधिरस्य भूषणगणैर्लावण्यहीनस्य किं ।
किं भोज्यैर्ज्वरजर्जरस्य विभवैः प्रौढैरदातुश्च किं ? ॥३३॥

वाणी सची बोलनी चाहिए।

सत्यपूतं वदेद्वाक्यं, वस्त्रपूतं जलं पिबेत् ।
दृष्टिपूतं न्यसेत्पाद, मनःपूतं समाचरेत् ॥ ३४ ॥

हरणादि मरे हुए शरीर से परोपकार करते हैं।

कस्तूरी पृषता, रदा॰ करटिना, कृत्ति॰ पशूना, पयो,
धेनूना, छदमंडलानि शिखिना, रोमाण्यवीनामपि ॥
पुच्छस्नायुवसाविषाणनखरस्वेदादिकं किञ्चन ।
स्यात्कस्याप्युपकारि मर्त्यवपुषो नामुष्य किञ्चित्पुनः॥३५॥

इन्द्रियदमन कठिन है।

विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशिन-
स्तेऽपि स्त्रीमुखपंकजं सुललित दृष्ट्वैव मोह गताः ।
आहार सघृत पयोदधियुत भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ?॥३६॥

पशुपक्षी भि काल से काम का सेवन करते हैं।

सिंहो बली द्विरदशूकरमासभोजी,
संवत्सरेण रतिमेति किलैकवार ।
पारापतः खरशिलाकणभोजनोऽपि,
कामी भवत्यनुदिनं वद कोऽत्र हेतु॰ ॥ ३७ ॥

काम को जितनेवाले स्थूलभद्र को धन्य है।

वेश्या रागवती सदा तदनुगा पड्भी रसैर्भोजनं,
रम्यं धाम मनोहरं वपुरहो नव्यो वयःसंगमः।
कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरात्,
तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥३८॥

कलियुग का प्रभाव।

धर्मः पर्वगतस्तपः कपटतः सत्यं च दूरे गतं,
पृथ्वी मंदफला नृपाश्च कुटिलाः शस्त्रायुधा ब्राह्मणाः।
लोकः स्त्रीषु रतः स्त्रियोऽतिचपला लौल्ये स्थिता मानवाः,
साधुः सीदति दुर्जनः प्रभवति प्रायः प्रविष्टः(ष्टे) कलिः(लौ)३९।

निर्वीर्या पृथिवी निरौषधिरसा नीचा महत्त्वं गता,
भूपाला निजधर्मकर्मरहिता विप्राः कुमार्गे रताः।
भार्या भर्तृवियोगिनी पररता पुत्राः पितुर्द्वेषिणो,
हा ! कष्टं खलु दुर्लभाः कलियुगे धन्या नराः सज्जनाः।४०।

विद्वत्ता वसुधातले विगलिता, पाण्डित्यधर्मो गतः।
श्रोतॄणां हृदयेष्वबुद्धिरधिका, ज्ञानं गतं चारणे ॥
गाथागीतविनोदवाक्यरचनायुक्त्या जगद्रंजितं।
ज्योतिर्वैद्यकशास्त्रसारमखिलं शूद्रेषु जातं कलौ ॥ ४१ ॥

सीदंति संतो विलसंत्यसंतः, पुत्रा म्रियन्ते जनकश्चिरायुः।
स्वजनेषु रोषश्च परेषु तोषः, पश्यन्तु लोकाः कलिकौतुकानि

दाता दरिद्रः कृपणो धनाढ्यः,पापी चिरायुः सुकृती गतायुः।
कुलीनदास्यं ह्यकुलीनराज्यं,कलौ युगे पद् गुणमात्रहन्ति।४२।

यह दस प्रकार के कल्पवृक्ष होते है ।

मत्तंगा भिंगंगा, तुडिअंगा दीवासिह जोइसिहा ।
चित्तगा चित्तरसा, मणिअंगा गेहागारा अणिगा य ॥४४॥

देव की अपेक्षा मनुष्य जन्म अच्छा है ।

देवा विसयपमत्ता, नेरइया निविहदुक्खमतत्ता ।
तिरिआ विवेगविगला, मणुआण धम्मसामग्गी ॥४५॥

धन के सिवाय सब नकमा है ।

जातिर्यातु रसातल गुणगणस्तस्याप्यधो गच्छतां,
शील शैलतटात्पतत्वभिजनः मदह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु न. केवलं,
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ४६ ॥

पुण्य के चिह्न ।

कुङ्कुम कज्जल केवडो भोजन कूरकपूर ।
कामिनी कंचन कप्पडा एह पुण्य अकूर ॥ ४७ ॥

भाग्य से ज्यादा कोई नहीं देता ।

भाग्याधिकं नैव नृपो ददाति, तुष्टोऽपि वित्तं खलु याचकस्य ।
रात्रौ दिवा वर्षतु वारिधारा,तथापि पत्रत्रितयं पलाशे ।।४८।।

मोक्षाभिलाषी जिनेश्वर पर प्रीति रखता है ।

देहे द्रव्ये कुटुम्बे च, सर्वसंसारिणां रतिः ।
जिने जिनमते संघे, पुनर्मोक्षाभिलाषिणाम् ॥ ४९ ॥

पांच प्रमाद ।

मज्जं विसयकसाया निद्दा विगहा य पंचमी भणिया ।
एए पंचपमाया जीवं पाडंति संसारे ॥ ५० ॥
वर्षं मेघ कुणालायां दिनानि दश पंच च ।
मुशलप्रमाण(लमान)धाराभिर्यथा रात्रौ तथा दिवा ॥ ५१ ॥

भाग्यहीन को पास में रही लक्ष्मी नहीं दीखती ।

पदे पदे निधानानि, योजने रसकूपिका: ।
भाग्यहीना न पश्यन्ति, वहुरत्ना वसुंधरा ॥ ५२ ॥

तीर्थ में जानेवाला भवभ्रमण नहीं करता है ।

श्रीतीर्थपांथरजसा विरजीभवन्ति,
तीर्थेषु बंभ्रमणतो न भवे भ्रमन्ति ।
द्रव्यव्ययादिह नराः स्थिरसंपदः स्युः,
पूज्या भवंति जगदीशमथार्चयन्तः ॥ ५३ ॥

पुरुष पृथ्वी का आभूषण है ।

वसुधाभरणं पुरुषाः, पुरुषाभरणं प्रधानतरलक्ष्मीः ।
लक्ष्म्याभरणं दानं, दानाभरणं सुपात्रं च ॥ ५४ ॥

द्रव्य के बिना सब निष्फल है ।

साकारोऽपि सविद्योऽपि, निर्द्रव्यः क्वापि नार्घ्यते ।
व्यक्ताक्षरः सुवृत्तोऽपि, द्रम्मः कूटो यथा जने ॥ ५५ ॥

धनवाला सर्व श्रेष्ठ है ।

यस्यास्ति वित्तं स नरः कुलीनः,स पंडितः स श्रुतवान् गुणज्ञः।
स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काचनमाश्रयन्ते।५६।

धन अन्याय से नहीं लेना चाहिए ।

अन्यायोपार्जित वित्त, दश वर्षाणि तिष्ठति ।
प्राप्ते त्वेकादशे वर्षे, समूलं च विनश्यति ॥ ५७ ॥

दान और भोग नहीं करनेवाले का धन नहीं रहता ।

दान भोगो नाश-स्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते, तस्य तृतीया गतिर्भवति ॥५८॥
दातव्यं भोक्तव्यं, सति विभवे सचयो न कर्तव्यः ।
पश्येह मधुकरीणा, सचितमर्थं हरन्त्यन्ये ॥ ५९ ॥

नकार की विचित्रता ।

नाणं नियमग्गहणं, नवकारो नयरुई अ निद्दा य ।
पंच नकारविभूसियाण, न दुल्लहा सुग्गई लोए ॥ ६० ॥
नारी-नदी-नरेन्द्राणा, नागानां च नियोगिनां ।
नखिनां च न विश्वास , कर्तव्य श्रियमिच्छता ॥ ६१ ॥

अवगमयति कृत्याकृत्यभेदं गुरुर्यो,
भवजलनिधिपोतस्तं विना नास्ति कश्चित् ॥७४॥

हितशिक्षा बालक से भी लेनी चाहिए ।

बालादपि हितं ग्राह्य–ममेध्यादपि काञ्चनं ।
निचादप्युत्तमा विद्या, स्त्रीरत्नं दुष्कुलादपि ॥ ७५ ॥

द्यूतासक्तता ।

स वटः पंच ते यक्षा, ददति च हरन्ति च ।
अक्षान् पातय कल्याणि, यद्भाव्यं तद्भविष्यति ॥७६॥

भावना फलदायी होती है ।

भावना मोक्षदा स्वस्य, स्वान्ययोस्तु प्रभावना ।
प्रकारेणाधिकं मन्ये, भावनातः प्रभावनाम् ॥ ७७ ॥

पुण्यानुबन्धी पुण्य ।

दया दानेषु ( नं च ) वैराग्यं, विधिवज्जिनपूजनं ।
विशुद्धा न्यायवृत्तिश्च, पुण्यं पुण्यानुबन्ध्यदः ॥७८॥

देवद्रव्य नहीं खाना चाहिए ।

देवद्रव्येण या वृद्धि,–र्गुरुद्रव्येण यद्धनं ।
तद्धनं कुलनाशाय, मृतोऽपि नरकं व्रजेत् ॥ ७९ ॥

स्वर्ग से पात कब होता है ?

प्रभास्वं (साधारणद्रव्यं) ब्रह्महत्या च, दरिद्रस्य च यद्धनं ।
गुरुपत्नी देवद्रव्यं, स्वर्गस्थमपि पातयेत् ॥ ८० ॥

विद्यादि यत्न से आते है।

यत्नानुसारिणी विद्या, लक्ष्मी पुण्यानुसारिणी।
दानानुसारिणी कीर्ति-र्बुद्धिः कर्मानुसारिणी ॥ ८१ ॥

देवपूजा में कैसे पुष्प लेना ?

नैकपुष्पं द्विधा कुर्या-न्न छिन्द्यात् कलिकामपि।
चंपकोत्पलभेदेन, भवेद्दोषो विशेषतः ॥ ८२ ॥

गुरु कैसा होना चाहिए।

नरयगइगमणपडिह-त्थए कए तहय पएसिणा रण्णा।
अमरविमाण पत्त, त आयरिअप्पभावेण ॥ ८३ ॥

अभयदान महिमा।

हेमधेनुधरादीनां, दातारः सुलभा भुवि।
दुर्लभः पुरुषो लोके, यः प्राणिष्वभयप्रदः ॥ ८४ ॥

पशुघात करनेवाले की दशा।

यावन्ति रोमकूपाणि, पशुगात्रेषु भारत !।
तावन्ति वर्षलक्षाणि, पच्यन्ते पशुघातकाः ॥ ८५ ॥

भावना से क्या होता है ?

दारिद्र्यनाशनं दानं, शील दुर्गतिनाशनं।
अज्ञाननाशिनी प्रज्ञा, भावना भवनाशिनी ॥ ८६ ॥

ऋषि का उपशमभाव।

सारंगी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं,
मार्जारी हंसबालं प्रणयपरवशा केकिकान्ता भुजंगं।

वैराण्याजन्मजातान्यपि गलितमदा जन्तवोऽन्ये त्यजन्ति,
श्रित्वा साम्यैकरूढं प्रशमितकलुषं योगिनं क्षीणमोहं ॥८७॥

मृग का पश्चात्ताप ।

भावण भावे हरिणउ, नयणे नीर झरन्त ।
मुणि विहरावत भावसुं, जो हुं माणस हुंत ॥ ८८ ॥

रात्रिभोजन नहीं करने का फल ।

ये च रात्रौ सदाहारं, वर्जयन्ति सुमेधसः ।
तेषां पक्षोपवासस्य, फलं मासेन जायते ॥ ८९ ॥

शील का महिमा ।

श्रीमन्नेमिजिनो दिनोऽघतमसां जम्बुप्रभुः केवली,
सम्यग्दर्शनवान् सुदर्शनगृही स स्थूलभद्रो मुनिः ।
सच्चंकारी सरस्वती च सुभगा सीता सुभद्रादयः,
शीलोदाहरणे जयन्ति जनितानंदा जगत्यद्भुताः ।९०।

गृहस्थ के षट्कर्म ।

देवपूजा गुरूपास्तिः, स्वाध्यायः संयमस्तपः ।
दानं चेति गृहस्थानां, षट्कर्माणि दिने दिने ॥९१॥

तीर्थंकर की पूजा का फल ।

आयुष्कं यदि सागरोपममितं व्याधिव्यथावर्जितं,
पाण्डित्यं च समस्तवस्तुविषयं प्रावीण्यलब्धास्पदं ।
जिह्वा कोटिमिता च पाटवयुता स्यान्मे धरित्रीतले,
नो शक्नोमि तथापि वर्णितुमलं तीर्थेशपूजाफलम् ॥९२॥

ब्रह्मचर्य सब से श्रेष्ठ है।

औदार्येण विना पुंसां, सर्वेऽन्ये (सर्वान्या) निष्फलाः कलाः।
ब्रह्मचर्य विना यद्वद्, यतीनां निष्फला गुणाः ॥९३॥

पुरुषोत्तम कौण है ?

स्त्रीणां श्रीणां च ये वश्या-स्तेऽवश्यं पुरुषाधमाः।
स्त्रियः श्रियश्च यद्वश्या-स्तेऽवश्य पुरुषोत्तमाः ॥ ९४ ॥

धर्मलाभ का महिमा।

दीर्घायुः स्वास्ति धनवान्, पुत्रवान् प्रमुखाः परे।
आशीर्वादा अमी सर्वे, धर्मलाभस्य किंकराः ॥ ९५ ॥
आरंभे नत्थि दया, महिलासंगेण नासए बंभं।
संकाए सम्मत्त, पव्वज्जा दव्वग्ग(ग)हणेण ॥ ९६ ॥

विनय का माहात्म्य।

विणओ सासणे मूल, विणओ संजओ भवे।
विणयाओ विप्पमुक्कस्स, कओ धम्मो कओ तवो ॥९७॥

जिनपूजा का महिमा।

महाव्याधिग्रस्तः शटितवसनो दीनवदनो,
बुभुक्षाक्षामात्मा परगृहशतप्रेषणपरः ।
सुदुःखार्तो लोके भ्रमति हि भवे येन कुधिया,
न सद्भक्त्या ध्यातो ननु जिनपतिश्चिंतितफलः ॥९८॥

पांच प्रकार के शौच ।

सत्यं शौचं तपः शौचं, शौचमिन्द्रियनिग्रहः ।
सर्वभूतदया शौचं, जलशौचं च पंचमं ॥ ९९ ॥

पात्रपरीक्षा ।

मूर्खस्तपस्वी राजेन्द्र, विद्वांश्च वृषलीपतिः ।
उभौ तौ तिष्ठतो द्वारे, कस्य दानं प्रदीयते ? ॥ १०० ॥

श्वानचर्मगता गंगा, क्षीरं मद्यघटस्थितं ।
कुपात्रे पतिता विद्या, किं करोति युधिष्ठिर ? ॥ १०१ ॥

न विद्यया केवलया, तपसापि च पात्रता ।
यत्र विद्या चरित्रे(त्रं) च, तद्धि पात्रं प्रचक्ष्यते ॥१०२॥

जीवन का फल ।

भवणं जिणस्स न कयं, न य बिंबं न य पूइआ साहू ।
दुद्धरवयं न धरियं, जम्मो परिहारिओ तेहिं ॥ १०३ ॥

न देवपूजा न च पात्रपूजा, न श्राद्धधर्मश्च न साधुधर्मः ।
लब्ध्वापि मानुष्यमिदं समस्तं, कृतं मयारण्यविलापतुल्यं ॥
॥ १०४ ॥

उदारभावना ।

अयं निजः परो वेति, गणना लघुचेतसां ।
उदारचरितानां तु, वसुधैव कुटुम्बकम् ॥ १०५ ॥

देवांशी कोण होता है ?

देवपूजा दया दानं, दाक्षिण्यं दक्षता दमः ।
यस्यैते षड् दकाराः स्युः, स देवांशो नरः स्मृतः ॥१०६॥

चार प्रकार का धर्म ।

दानं सुपात्रे विशदं च शील, तपो विचित्रं शुभभावना च ।
भवार्णवोत्तारणसत्तरंडं, धर्मं चतुर्धा मुनयो वदन्ति ॥१०७॥

अभयदान प्रशंसा ।

यो दद्यात्कांचनं मेरुं, कृत्स्ना चैव वसुंधरां ।
एकस्य जीवितं दद्या—न्न च तुल्य युधिष्ठिर ! ॥ १०८ ॥

अहिंसाव्रत श्रेष्ठ है ।

अपि वंशक्रमायातां, यस्तु हिंसां परित्यजेत् ।
स श्रेष्ठः सुलस इव, कालसौकरिकात्मजः ॥ १०९ ॥

पात्र की प्रशंसा ।

भौमे मंगलनाम विष्टिविषये भद्रा कणानां क्षये,
वृद्धिः शीतलिकेऽवितीव्रपिटके राजा रजःपर्वणि ।
मिष्टत्वं लवणे विषे च मधुरः काः कंटकाढ्या यथा,
पात्रत्वं च पणांगनासु रुचिरं नाम्ना तथा नार्थतः ॥११०॥

दया सर्वत्र करना चाहिये ।

दानधर्मे महेच्छानां, किं पात्रापात्रचिंतया ।
दीनाय देवदूष्यार्धं, यथादात्कृपया प्रभुः ॥ १११ ॥

अपकारिष्वपि कृपां, सुधीः कुर्याद्विशेषतः ।
दंदशूकं दशंतं श्री-वीरः प्राबोधयद्यथा ॥ ११२ ॥

ब्रह्मचारी पवित्र है !

शुचि भूमिगतं तोयं, शुचिर्नारी पतिव्रता ।
शुचिर्धर्मपरो राजा, ब्रह्मचारी सदा शुचिः ॥ ११३ ॥

व्रतभंग से क्या होता है ?

प्राणान्तेऽपि न भंक्तव्यं, गुरुसाक्षिकृतं व्रतं ।
व्रतभंगोऽतिदुःखाय, प्राणा जन्मनि जन्मनि ॥ ११४ ॥

स्त्री-चरित्र की विचित्रता !

रविचरियं गहचरियं, ताराचरियं च राहुचरियं च ।
जाणंति बुद्धिमंता, महिलाचरियं न जाणंति ॥ ११५ ॥

तप का प्रभाव ।

चक्रे तीर्थकरैः स्वयं निजगदे तैरेव तीर्थेश्वरैः,
श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारणं ।
सद्यो विघ्नहरं हृषीकदमनं मांगल्यमिष्टार्थकृत्,
देवाकर्षणमारदर्पदलनं तस्माद्विधेयं तपः ॥ ११६ ॥

कोप वर्जनीय है ।

एकेन दिनेन तनो-स्तेजः षण्मासिकं ज्वरो हंति ।
कोपः क्षणेन सुकृतं, यद्-र्जितं पूर्वकोट्यापि ॥ ११७ ॥

कषाय से हानि।

कषाया देहकारायां, चत्वारो यामिका इव।
यावज्जाग्रति ते पापा-स्तावन्मोक्षः कुतो नृणां? ॥११८॥

मुक्ति का मन्त्र।

आशाम्बरत्वे न सिताम्बरत्वे, न तत्त्ववादे न च तर्कवादे।
न पक्षसेवाश्रयणेन मुक्तिः, कषायमुक्ति किल मुक्तिरेव॥
॥ ११९ ॥

दानादि से रहित का जीवन निष्फल है।

दानं तपस्तथा शील, नृणां भावेन वर्जितं।
अर्थहानिस्तथा पीडा, कायक्लेशश्च केवलं ॥ १२० ॥

सद्भाव से क्या फल होता है?

दुग्धं देयानुमानेन, कृषिर्मेघानुसारतः।
लाभो व्ययानुमारेण, पुण्यं भावानुसारतः ॥१२१॥

भाव का महिमा।

भावेषु विद्यते देवो, न पाषाणे न मृन्मये।
न रत्ने न च सौवर्णे, तस्माद्भावो हि कारणम् ॥१२२॥

सात क्षेत्र।

जिनभवनबिम्बपुस्तक-चतुर्विधश्रमणसंघरूपाणि।
सप्त क्षेत्राणि सदा, जयन्ति जिनशासनोक्तानि ॥१२३॥

वक्ता का लक्षण ।

शतेषु जायते शूरः, सहस्रेषु च पण्डितः ।
वक्ता शतसहस्रेषु, दाता भवति वा न वा ॥ १२४ ॥

आगम लिखने का फल ।

न ते नरा दुर्गतिमाप्नुवन्ति, न मूकतां नैव जडस्वभावं ।
नैवान्धतां बुद्धिविहीनतां च, ये लेखयन्त्यागमपुस्तकानि ॥
॥ १२५ ॥

धर्म का फल ।

न कयं दीणुद्धरणं, न कयं साहम्मियाणवच्छल्लं ।
हिययंमि वीयराओ, न धारिओ हारिओ जम्मो ॥१२६॥

उत्तम पात्र कौण है ? ।

उत्तमपत्तं साहू, मज्झं पत्तं सुसावगा भणिया ।
अविरयसम्मद्दिट्ठी, जहन्नपत्तं मुणेयव्वं ॥ १२७ ॥

पूजा का महिमा ।

संसाराम्भोधिवेडा शिवपुरपदवी दुर्गदारिद्र्यभूभृ-
द्भंगे दम्भोलिभूता सुरनरविभवप्राप्तिकल्पद्रुकल्पा ।
दुःखाग्नेरम्बुधारा सकलसुखकरी रूपसौभाग्यकर्त्री,
पूजा तीर्थेश्वराणां भवतु भवभृतां सर्वकल्याणकर्त्री।१२८।

सयं पमज्जणे पुण्णं, सहस्सं च विलेवणे ।
सयसाहस्सिया माला, अणंतं गीयवाइए ॥ १२९ ॥

वीतराग कैसे हो सकते है ? ।

वीतरागं स्मरन् योगी, वीतरागत्वमश्नुते ।
ईलिका भ्रमरीभीता, ध्यायंती भ्रमरी यथा ॥ १३० ॥

जिनपूजा का महिमा ।

स्वर्गस्तस्य गृहाङ्गणं सहचरी साम्राज्यलक्ष्मीः शुभा,
सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि ।
संसारः सुतरः शिवं करतलक्रोडे लुठत्यंजसा,
यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ।१३१।

तवनियमेण य मुक्खो, दाणेण य हुंति उत्तमा भोगा ।
देवच्चणेण रज्जं, अणसणमरणेण इंदत्तं ॥ १३२ ॥

यास्याम्यायतनं जिनस्य लभते ध्यायंश्चतुर्थं फलं,
षष्ठं चोत्थितुमुद्यतोऽष्टममथो गन्तुं प्रवृत्तोऽध्वनि ।
श्रद्धालुर्दशमं बहिर्जिनगृहात् प्राप्तस्ततो द्वादशं,
मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलम् ।१३३।

वस्तुपाल की तीर्थयात्रा का वर्णन ।

पत्राणां हयशालवदिषु भवेद् द्रव्यव्ययः प्रायशः,
शृंगारे पथयोषितां च वणिजां वयये कृषौ कैश्चिदां ।
पापानां मधुमांसयोर्व्यसनिनां रांपूतमद्यादिके,
भूमध्ये कृपणात्मनां सुकृतिनां श्रीतीर्थयात्रादिषु ॥१३४॥

स्त्रीओं की जूठी प्रशंसा ।

नो सत्येन मृगाङ्क एव वदनीभूतो न चेन्दीवर–
द्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता ।
किं त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि,
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मत्वा जनः सेवते १३५

यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृतिधरं,
मुखाब्जं तन्वङ्ग्याः किल वसति यत्राधरमधुः ।
इदं तत्किम्पाकद्रुमफलमिवातीव विरसं,
व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ।१३६।

व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना,
नीलाब्जद्युतिनाऽहिना वरमहं दष्टो न तच्चक्षुषा ।
दष्टे संति चिकित्सका दिशि दिशि प्रायेण पुण्यार्थिनो,
मुग्धाक्षीक्षणवीक्षितस्य नहि मे वैद्यो न वाप्यौषधम् १३७

नूनं हि ते कविवरा विपरीतबोधा,
ये नित्यमाहुरबला इति कामिनीनाम् ॥
याभिर्विलोलतरतारकदृष्टिपातैः,
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ?॥ १३८ ॥

सम्पत्ति कहां जाती है ? ।

स किं सखा साधु न शास्ति योऽधिपं,
हितान्न यः संशृणुते स किं प्रभुः ।
सदाऽनुकूलेषु हि कुर्वते रतिं,
नृपेष्वमात्येषु च सर्वसम्पदः ॥ १३९ ॥

पूर्वपुण्य का फल मीलता है।

पूर्वोपार्जितपुण्यानां, फलमप्रतिमं खलु।
पुण्यच्छेदेऽथवा सर्वे, प्रयाति विपरीतताम् ॥ १४० ॥

श्रोत्रिय की व्याख्या।

जन्मना ब्राह्मणो ज्ञेयः, संस्काराद् द्विज उच्यते।
विद्यया याति विप्रत्वं, त्रिभिः श्रोत्रिय उच्यते ॥१४१॥

प्रभु की स्तवना।

यद्विज्वालावलीढं कुपथमथनधीर्मातुरस्तोकलोक-
स्याग्रे सदर्श्य नागं कमठमुनितपः स्पष्टयन् दुष्टमुच्चैः।
यः कारुण्यामृताब्धिर्विधुरमपि किल स्वस्य सद्यः प्रपद्य,
प्राज्ञं कार्यं कुमार्गस्खलनमिति जगौ देवदेवं स्तुमस्तम्॥

दानप्रशंसा।

दानेन भूतानि वशीभवन्ति, दानेन वैराण्यपि यान्ति नाशम्।
परोऽपि बन्धुत्वमुपैति दानात्, ततः पृथिव्यां प्रवरं हि दानम्॥

व्याकरण की महत्ता।

अङ्गीकृतं कोटिमितं च शास्त्रं, नाङ्गीकृतं व्याकरणं च येन।
न शोभते तस्य मुखारविन्दं, सिन्दूरबिन्दुर्विधवाललाटे ॥

धर्म को जल्दी करना चाहिए।

अजरामरवत्प्राज्ञो, विद्यामर्थं च चिन्तयेत्।
गृहीत इव केशेषु, मृत्युना धर्ममाचरेत् ॥ १४५ ॥

विद्याप्रशंसा ।

गतेऽपि वयसि ग्राह्या, विद्या सर्वात्मना बुधैः ।
यद्यपि स्यान्न सुलभा, सुलभा सान्यजन्मनि ॥१४६॥

न चौरहार्यं न च राजहार्यं, न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं, विद्याधनं सर्वधनं प्रधानम् ॥

धर्महीन पशु है ।

आहारनिद्राभयमैथुनं च, सामान्यमेतत्पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो, धर्मेण हीनाः पशुभिः समानाः॥

काम की उपशान्ति ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४९ ॥

दारिद्र्य निन्दा ।

हे ! दारिद्र ! नमस्तुभ्यं, सिद्धोऽहं त्वत्प्रसादतः ।
अहं सर्वत्र पश्यामि, मां च कोऽपि न पश्यति ॥१५०॥

वीर कोण है ?

संपदि यस्य न हर्षो, विपदि विषादो रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं, जनयति जननी सुतं विरलम् ॥१५१॥

कर्त्तव्य नहि भूलना चाहीए ।

कर्त्तव्यमेव कर्त्तव्यं, प्राणैः कण्ठगतैरपि ।
अकर्त्तव्यं न कर्त्तव्यं, प्राणैः कण्ठगतैरपि ॥ १५२ ॥

कालिदास का भोज से प्रश्न ।

खादन्न गच्छामि हसन्न भाषे, गतं न शोचामि कृतं न मन्ये।
द्वाभ्यां तृतीयो न भवामि राजन्! अस्मादृशा' केन गुणेन मूर्खाः?

तृष्णा निरुपद्रव है ।

यौवनं जरया ग्रस्तं, शरीरं व्याधिपीडितम् ।
मृत्युराकाङ्क्षति प्राणाॅ-स्तृष्णैका निरुपद्रवा ॥ १५४॥

दरिद्रता सर्वशून्य है ।

अपुत्रस्य गृहं शून्यं, दिशः शून्या ह्यबान्धवाः ।
मूर्खस्य हृदयं शून्यं, सर्वशून्या दरिद्रता ॥ १५५ ॥

समय व्यर्थ नहीं करना ।

धर्मारम्भे ऋणच्छेदे, कन्यादाने धनागमे ।
शत्रुघातेऽग्निरोगे च, कालक्षेपं न कारयेत् ॥ १५६ ॥

ब्रह्मचारी की गति ।

एकरात्र्युषितस्यापि, या गतिर्ब्रह्मचारिणः ।
न सा क्रतुसहस्रेण, वक्तुं शक्या युधिष्ठिर ! ॥१५७॥

राजा सब का आश्रय है ।

दुर्बलानामनाथानां, बालवृद्धतपस्विनाम् ।
अनार्यैः परिभूतानां, सर्वेषां पार्थिवो गतिः ॥१५८॥

भय कहाँ नहीं जाता ? ।

उद्यमे नास्ति दारिद्र्यं, जपतो नास्ति पातकम् ।
मौनेन कलहो नास्ति, नास्ति जागरतो भयम् ॥ १५९ ॥

पार्श्वप्रभुस्तुति ।

कोऽयं नाथ ! जिनो भवेत्तव वशी हूँ हूँ प्रतापी प्रिये !,
हूँ हूँ तर्हि विमुञ्च कातरमते शौर्यावलेपक्रियां ।
मोहोऽनेन विनिर्जितः प्रभुरसौ तत्किंकराः के वयं,
इत्येवं रतिकामजल्पविषयः पार्श्वः प्रभुः पातु नः ॥१६०॥

जाति कारण नहीं है ।

श्वपाकीगर्भसंभूतः, पाराशरमहामुनिः ।
तपसा ब्राह्मणो जात-स्तस्माज्जातिरकारणम् ॥१६१॥

कैवर्त्तीगर्भसंभूतो, व्यासो नाम महामुनिः ।
तपसा ब्राह्मणो जात-स्तस्माज्जातिरकारणम् ॥ १६२ ॥

शशकीगर्भसंभूतः, शुको नाम महामुनिः ।
तपसा ब्राह्मणो जात-स्तस्माज्जातिरकारणम् ॥ १६३ ॥

न तेषां ब्राह्मणी माता, संस्कारश्च न विद्यते ।
तपसा ब्राह्मणो(णा) जात(ता)-स्तस्माज्जातिरकारणम् ।१६४।

शूद्रोऽपि शीलसंपन्नो, गुणवान् ब्राह्मणो भवेत् ।
ब्राह्मणोऽपि क्रियाहीनः, शूद्रापत्यसमो भवेत् ॥ १६५ ॥

जीव का होम करनेवाले अपने संबंधी का होम क्युं नहीं करते ? ।

नाहं स्वर्गफलोपभोगरसिको, नाभ्यर्चितस्त्वं मया,
संतुष्टस्तृणभक्षणेन सततं, साधो न युक्तं तव ।
स्वर्गे यांति यदि त्वया विनिहता, यज्ञे ध्रुवं प्राणिनो,
यज्ञं किं न करोषि मातृपितृभिः, पुत्रैस्तथा बांधवैः ? ॥१६६॥

इन को गगा पवित्र नहीं करती ।

चित्तं रागादिभिः क्लिष्टं, अलीकवचनैर्मुखम् ।
जीवघातादिभिः कायो, गङ्गा तस्य पराङ्मुखी ॥ १६७ ॥

हिंसा की व्याख्या ।

पचेन्द्रियाणि त्रिविध बल च,
उच्छ्वासनिःश्वासमथान्यदायुः ।
प्राणा दशैते भगवद्भिरुक्ता—
स्तेषा वियोगीकरण तु हिंसा ॥ १६८ ॥

लक्ष्मी का प्रभाव ।

पूज्यते यदपूज्योऽपि, यदगम्योऽपि गम्यते ।
वद्यते यदवद्योऽपि, तत्प्रभावो धनस्य च ॥ १६९ ॥

जिन की व्याख्या—

रागो द्वेपस्तथा मोहो, जितो येन जिनो ह्यसौ ।
अस्त्रीशस्त्राक्षमालात्वा-दर्हन्नेवानुमीयते ॥ १७० ॥

चोर निष्फल कैसे हो ? ।

आदिचौरकपिलस्य, ब्रह्मलब्धवरस्य च ।
तस्य स्मरणमात्रेण, चोरो गच्छति निष्फलम् ॥ १७१ ॥

दिवा काकरवाभीता, रात्रौ तरति नर्मदां ।
तत्र किं मकरो नास्ति, सा हि जानाति सुंदरी ॥ १७२ ॥

लंका का नाश ।

दिधक्षन्मारुतेर्वालं तमादीप्यद् दशाननः ।
आत्मीयस्य पुरस्यैव, सद्यो दहनमन्वभूत् ॥ १७३ ॥

नारी आश्रित को कलंकित करती है ।

लोके कलंकमपहातुमयं मृगाङ्को,
जातो मुखं तव पुनस्तिलकच्छलेन ।
तत्रापि कल्पयसि तन्वि कलंकरेखां,
नार्यः समाश्रितजनं हि कलंकयन्ति ॥ १७४ ॥

शान्तिप्रिय कोण है ? ।

काव्यं सुधा रसज्ञानां, कामिनां कामिनी सुधा ।
धनं सुधा सलोभानां, शान्तिः संन्यासिनां सुधा ॥१७५॥

आत्मशिक्षा ।

यात्येकतोऽस्तशिखरं पतिरौषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां,
लोको नियम्यत इवात्मदशान्तरेषु ॥ १७६ ॥

सद्गुणी का लक्षण ।

स्वश्लाघा परनिंदा च, लक्षणं निर्गुणात्मनाम् ।
परश्लाघा स्वनिंदा तु, लक्षणं सद्गुणात्मनाम् ॥१७७॥

उत्तमता गुण से आती है ।

गुणैरुत्तमतां याति, न तु जातिप्रभावत ।
क्षीरोदधिसमुत्पन्नः, कालकूटः किमुत्तमः ?॥ १७८ ॥

अतिपरिचय का निषेध ।

अतिपरिचयादवज्ञा, भवति विशिष्टेऽपि वस्तुनि प्रायः ।
लोकः प्रयागवासी, कूपे स्नान सदा कुरुते ॥ १७९ ॥

मित्रता कहा करना ?

मृगा मृगैः सगमनुव्रजंति, गावश्च गोभिस्तुरगास्तुरगैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः, समानशीलव्यसनेषु सख्यम् ॥

सच्चा वीतराग कोण है ? ।

प्रशमरसनिमग्न दृष्टियुग्म प्रसन्न,
वदनकमलमकः कामिनीसगशून्यः ।
करयुगमपि यत्ते शस्त्रसंबन्धवन्ध्यं,
तदसि जगति देवो वीतरागस्त्वमेव ॥ १८१ ॥

निर्मल ज्ञानी सम्यक्त्वहीन नहीं हो सकता ।

जानन्ति यद्यपि चतुर्दश चारुविद्या,
देशोनपूर्वदशकं च पठन्ति सार्थम् ।
सम्यक्त्वमीश ! न धृत तव नैव तेषां,
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ १८२ ॥

काक भी काक का विवेक करता है ।

काकोऽप्याहूय काकेभ्यो, दत्त्वान्नाद्युपजीवति ।
ततोऽपि हीनस्तदहं, भोगान् भुंजे विना ह्यमून् ॥१८३॥

प्रभु को नमस्कार ।

नमस्तुभ्यं जगन्नाथ, विश्वविश्वोपकारिणे ! ।
आजन्मब्रह्मनिष्ठाय, दयावीराय तायिने ॥ १८४ ॥

यह सब घातक है ।

हन्ता पलस्य विक्रेता, संस्कर्ता भक्षकस्तथा ।
क्रेतानुमन्ता दाता च, घातकाः सर्व एव ते ॥ १८५ ॥

महात्मा को दुःख नहीं देना चाहिए ।

महात्मगुरुदेवाना–मश्रुपातः क्षितौ यदि ।
देशभ्रंशो महद्दुःखं, मरणं च भवेद् ध्रुवम् ॥ १८६ ॥

आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनः चर्वितं,
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः ।
हे ! सद्रत्न तदा तवैव कुशलं यद्वानरेणादरा–
दन्तःसारविलोकनव्यसनिना चूर्णीकृतं नाश्मना ।१८७।

यह सब दूसरे के लिये है ।

वृक्षच्छाया, यतिद्रव्यं, कीटिकाधान्यसंचयः ।
पिता पालयते कन्या, ते सर्वे परकारणम् ॥ १८८ ॥

विषय के लिये क्या २ होता है ?

भिक्षाशनं तदपि नीरसमेकवारं,
शय्या च भूः परिजनो निजदेहमात्रं ।
वस्त्रं च जीर्णशतखण्डमयी च कंथा,
हा हा तथापि विषया न परित्यजन्ति ॥ १८६ ॥

सर्व श्रेष्ठ क्या है ? ।

पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु ।
युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥ १९० ॥

प्रभु की स्तुति ।

सिद्धार्थराजांगज देवराज!, कल्याणकैः पञ्चभिरिति स्तुतस्त्वम् ।
तथा विधेह्यांतरवैरिषट्कं, यथा जयाम्यद्य तव प्रसादात् ।१९१।

निद्रादि से रहित कोण होता है ? ।

चिंतातुराणां न सुखं न निद्रा ।
कामातुराणां न भयं न लज्जा ॥
अर्थातुराणा स्वजनो न बधु ।
क्षुधातुराणां न बलं न तेजः ॥ १९२ ॥

भावसे रहित धर्म क्या काम का ? ।

गुरुं विना न विद्या स्यात्, फलं नैव विना तरुम् ।
नाब्धिपारो विना नावं, धर्मो भावं विना न हि ॥१९३॥

धर्म को करना श्रेष्ठ है।

संसारम्मि असारे नत्थि सुहं वाहिवेअणापउरे।
जाणंता इह जीवा न कुणइ जिनदेसियं धम्मं ॥ १९४ ॥
न सा जाई न सा जोणी, न तं ठाणं न तं कुलं।
न जाया न मुआ जत्थ, सव्वे जीवा अणंतसो ॥१९५॥
अलस्स मोहवन्ना थंभा कोहा य लोह किवनत्तं।
निद्दा विगहा य कीडा इसा नेह च वीरायतं ॥ १९६ ॥

वचन में दरिद्रता क्यों करना ?।

प्रियवाक्यप्रसादेन सर्वे तुष्यन्ति जंतवः।
तस्मात्तदेव वक्तव्यं, वचने का दरिद्रता ? ॥ १९७ ॥

दम्भी से सब ठगाते हैं।

त्रिदशा अपि वंच्यंते, दाम्भिकैः किं पुनर्नराः ?।
देवी यक्षश्च वणिजा, लीलया वंचितावहो ॥ १९८ ॥

रक्षक भक्षक होंगे तो रक्षण कोण करेगा ?

माता यदि विषं दद्यात्, पिता विक्रयते सुतं।
राजा हराति सर्वस्वं, पूत्कर्त्तव्यं ततः क्व च ? ॥ १९९ ॥
प्रथमं डंबरं दृष्ट्वा, न प्रतीयाद् विचक्षणः।
अत्यल्पं पठितं कीरं, मेने च कुट्टिनी यथा ॥ २०० ॥

संग्रह फलदायी है।

कृतो हि संग्रहो लोके, काले स्यात् फलदायकः।
मृतसर्पसंग्रहेण, लेभे हारं वणिक् पुरा ॥ २०१ ॥

कर्म ही सब कुछ है ।

वैद्या वदन्ति कफपित्तमरुद्विकारं,
ज्योतिर्विदो ग्रहगणादिनिमित्तदोष ।
भूतोपसर्गमथ मंत्रविदो वदन्ति,
कर्मेति शुद्धमतयो यतयो वदति ॥ २०२ ॥

पशुवत् जीवन कीस का है ? ।

नानाशास्त्रसुभाषितामृतरसै. श्रोत्रोत्सवं कुर्वता,
येषा यान्ति दिनानि पडितजनव्यायामाखिन्नात्मना ।
तेषां जन्म च जीवित च सफल तैरेव भूर्भूषिता,
शेषैः किं पशुवत्विवेकविकलैः भूभारभूतैर्नरैः ॥ २०३ ॥

निःस्पृह को जगत् तृण तुल्य है ।

तृणं ब्रह्मविदः स्वर्गस्तृण शूरस्य जीवितम् ।
विरक्तस्य तृणं नारी, निःस्पृहस्य तृणं जगत् ॥ २०४ ॥
क्षण तुष्टः क्षणं रुष्टो, नानापूजां च वांछति ।
कन्याराशिस्थितो नित्यं, जामाता दशमो ग्रहः ॥ २०५ ॥

यह पाच जीने पर भी मरे समान है ।

जीवन्तोऽपि मृताः पच, व्यासेन परिकीर्तिताः ।
दरिद्रो व्याधितो मूर्खः, प्रवासी नित्यसेवक' ॥ २०६ ॥

अतिलोभ नहीं करना ।

एकं दृष्ट्वा शत दृष्ट्वा, दृष्ट्वा सप्त शतानि च ।
अतिलोभाभिभूतस्य, चक्र भ्रमति मस्तके ॥ २०७ ॥

स्त्री के स्वाभाविक दोष ।

वंचकत्वं नृशंसत्वं, चंचलत्वं कुशीलता ।
इति नैसर्गिका दोषा, यासां तासु रमेत कः ? ॥ २०८ ॥

पांच अनर्थ ।

मर्मवाग् दासविश्वासः, स्वैः कलिः खलसंगतिः ।
विरोधो बलिभिश्चामी, पंचानर्थाः प्रपंचकः ॥ २०९ ॥

कर्म की महत्ता ।

नमस्यामो देवान् ननु हतविधेस्तेऽपि वशगा,
विधिर्वंद्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किममरैः किं च विधिना ?,
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ २१० ॥

क्रोध क्या नहीं करता ? ।

क्रोधः कृपावल्लिदवानलोऽयं,
क्रोधो भवांभोनिधिवृद्धिकारी ।
क्रोधो जनानां कुगतिप्रदाता,
क्रोधो हि धर्मस्य विघातविघ्नः ॥ २११ ॥

स्वकर्मनिरताः सर्वे नान्यशिक्षामपेक्षते ॥ २१२ ॥

जीवदया सर्व श्रेष्ठ है ।

व्यर्थं दानं मुधा ज्ञानं, वृथा निर्ग्रंथतापि हि ।
अनार्या योगचर्यापि, न चेत् जीवदया भवेत् ॥ २१३ ॥

सच्चे और नित्य कुटुम्बी कौण है ?

धर्मो यस्य पिता क्षमा च जननी भ्राता मनःसंयमो,
मित्रं सत्यमिदं दया च भगिनी वीरागता गेहिनी ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं,
यस्यैतानि सदा कुटुम्बमनघं तस्येह कष्टं कथं ? ॥२१४॥

वह्नि प्रशंसा ।

तेजोमयोऽपि पूज्योऽपि, पापिना नीचधातुना ।
अयसा संगतो वह्निः, सहते घनताडनम् ॥ २१५ ॥

नीच संगकी निन्दा ।

महतोऽपि कुसंसर्गात् महिमा हीयते किल ।
कियन्नन्दति कर्पूरगन्धो लशुनसंगतः ॥ २१६ ॥
अंबस्स य निंबस्स य दुण्हवि समागयाइं मूलाइं ।
संसग्गए विणट्ठो, अंबो निंबत्तणं पत्तो ॥ २१७ ॥

कर्म की प्रधानता ।

इन्द्रोऽपि कीटतां याति, नरकं चक्रवर्त्यपि ।
पृथ्वीनाथोऽपि भृत्यत्वं, धनाढ्योऽपि दरिद्रताम् ॥ २१८ ॥
नीरोगोऽपि सरोगत्व दौर्भाग्यं सुभगोऽपि च ।
सर्वसुख्यपि दुःखित्व, समर्थोऽप्यसमर्थताम् ॥ २१९ ॥

कौन कारण से नारी दूसरा पति कर सकती है । ( पुराण )

पत्यौ प्रव्रजिते क्लीवे प्रनष्टे पतिते मृते ।
पचस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ २२० ॥

मानभंग नहीं होना चाहिये ।

वरं प्राणपरित्यागो, न मानपरिखण्डनम् ।
प्राणनाशात् क्षणं दुःखं मानभंगात् दिने दिने ॥ २२१ ॥

सब भाग्याधीन है ।

अन्यथा चिंतितं कार्यं दैवेन कृतमन्यथा ।
राजकन्याप्रसादेन मृदंगीमरणं भवेत् ॥ २२२ ॥

कैसे देव देव हो सकते हैं ।

हास्यादिषङ्कं चतुरः कषायान्, पंचाश्रवान् प्रेममदौ च केलिम् ।
तत्याज यस्त्याजयते च दोषान्, देवः स सेव्यः कृतिभिः शिवाय ॥ २२३ ॥

ब्रह्म का लक्षण ।

सत्यं ब्रह्म तपो ब्रह्म ब्रह्म चेन्द्रियनिग्रहः ।
सर्वभूतदया ब्रह्म एतद्ब्राह्मणलक्षणं ॥ २२४ ॥

ब्राह्मण होने पर शूद्र जैसा कौण है ।

ब्रह्मकुले च संभूतः, क्रियाहीनश्च यो नरः ।
नाम्ना स ब्राह्मणो भूत्वा, शूद्रापत्यसमो भवेत् ॥२२५॥

शूद्र ब्राह्मण नहीं हो सकते ।

जन्मना जायते शूद्रः, संस्काराद् द्विज उच्यते ।
शूद्रकुले च संभूतः ब्राह्मणः किं न जायते ॥ २२६ ॥

रात्रिभोजन निषेध ।

अस्तगते दिवानाथे, आपो रुधिरमुच्यते ।
अन्न मांससमं प्रोक्त, मार्कण्डेन महर्षिणा ॥ २२७ ॥

सखा बन्धु कोण है ? ।

आदौ धर्मधुरा कुटुम्बनिचये, क्षीणे च सा धारिणी,
विश्वासे च सखी हिते च भगिनी, लज्जावशाच्च स्नुषा ।
व्याधौ शोकपरिवृते च जननी, शय्यास्थिते कामिनी,
त्रैलोक्येऽपि न विद्यते भुवि नृणा, भार्यासमो बान्धवः ॥
॥ २२८ ॥

एको ध्यानमुभौ पाठं त्रिभिर्गीतं चतुःपथम् ।
पच सप्त कृषिं कुर्यात्, सङ्ग्राम बहुभिर्जनै ॥ २२९ ॥
सुगुणं विगुण नैव गणयति दयालव , ॥ २३० ॥

दश प्रकारकी नरक पीडा ।

ज्वरोष्णदाहभयशोकतृष्णाकण्डूबुभुक्षा अपि पारवश्यम् ।
शीतं पुनर्नारकिणामतीव दशप्रकारा प्रभवन्ति पीडाः ॥
॥ २३१ ॥

घोर नरक कीसके मिलता है ।

धर्मभ्रष्टा हि ते ज्ञेयास्तमाखुधूम्रपानतः ।
पतन्ति नरके घोरे रौरवे नात्र संशयः ॥ २३२ ॥
तमाखु-भग-मद्यानि, ये पिबन्ति नराधमाः ।
तेषां हि नरके वासो यावद् ब्रह्मा चतुर्मुखः ॥ २३३ ॥

ये पिबन्ति तमाखुं वै लक्ष्मीर्नश्यति तद्गृहात् ।
दारिद्र्यं वसति तेषां गुरौ भक्तिर्न संभवेत् ॥ २३४ ॥

घोरे कलियुगे प्राप्ते सर्वे वर्णाश्रमे रताः ।
तमालं भक्षितं येन स गच्छेत् नरकार्णवे ॥ २३५ ॥

ब्रह्मा भी खुश नहीं रहता ।

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥ २३६ ॥

मातंगी प्रथमे प्रोक्ता द्वितीये रजकी मता ।
रजस्वला तृतीये च शूद्रा तुर्ये च वासरे ॥ २३७ ॥

जातिका प्रभाव ।

नेच्छन्ति प्राकृतं मूर्खा मक्षिका चन्दनं यथा ।
क्षीरान्नं शूकरा यद्वद्, घूका इव रविप्रभाम् ॥ २३८ ॥

तमाखुपान निन्दा ।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तम ! ।
श्वपचैः सदृशा ज्ञेयास्तमाखुपानमात्रतः ॥ २३९ ॥

धूम्रपानरतं विप्रं दानं कुर्वन्ति ये नराः ।
दातारो नरकं यान्ति ब्राह्मणो ग्रामशूकरः ॥ २४० ॥

यस्तमाखुं पिबेत् सोऽपि स्वाश्रमान्निरये पतेत् ।
नारदाऽत्र न संदेहः सत्यं सत्यं मयोदितम् ॥ २४१ ॥

कालिदास का उत्तर । -

कियदत्र जलं विप्र ! जानुदघ्नं नराधिप ।
तदा केयमवस्था ते, न हि सर्वे भवादृशाः ॥ २४२ ॥

रामचन्द्र स्तुति ।

यद्भग्नं धनुरीश्वरस्य शिशुना यद् जामदग्न्यो जितः,
त्यक्ता येन गुरोर्गिरा वसुमती बद्धो यदम्भोनिधिः ।
एकैकं दशकधरस्य भयकृत् रामस्य किं वर्ण्यते,
दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषतां ॥२४३॥

देह असारता ।

यदि नामास्य कायस्य यदतस्तद्बहिर्भवेत् ।
दण्डमादाय लोकोऽयं, शुनः काकाँश्च वारयेत् ॥ २४४ ॥
उप्तो यः स्वत एव मोहसलिलो जन्मालवालोऽशुभो,
रागद्वेषकषायसन्ततिमहानिर्विघ्न बीजस्त्व या ।
रोगैरङ्कुरितो विपत्कुसुमितः कर्मद्रुमः साम्प्रत
सोढा नो यदि सम्यगेष फलितो दुःखैरधोगामिभिः ॥२४५॥

साधुप्रशंसा ।

सावद्ययोगविरतो, गौरवत्रयवर्जितः ।
त्रिगुप्तः पचसमितो रागद्वेषविनाकृतः ॥ २४६ ॥
निर्ममो नगरवसत्यंगोपकरणादिषु ।
ततोऽष्टादशशीलांगसहस्रधारणोद्धुरः ॥ २४७ ॥
निरन्तरं यथाशक्ति, नानाविधतपःपरः ।
सयमं सप्तदशधा, धारयन्नविखण्डितम् ॥ २४८ ॥

अष्टादशप्रकारं च ब्रह्मचर्यं समाचरन् ।
यत्रेदृग् ग्राहको दानं, तत्स्याद् ग्राहकशुद्धिमत् ॥ २४९ ॥

नित्यवस्तु को न छोडना चाहिए ।

विहाय जम्बुको मांसं, तीरे मीनाय धावितः ।
मीनोऽपि प्राविशत्तोयं, मांसं गृध्रोऽप्यपाहरत् ॥ २५० ॥

व्यसनी की पास लक्ष्मी नहिं जाती है ।

आसन्ने व्यसने लक्ष्म्या, लक्ष्मीनाथोऽपि मुच्यते ।
प्रकृतिव्यत्ययः प्रायो भवत्यंते शरीरिणाम् ॥ २५१ ॥

विषयसेवन निन्दा ।

आमसूत्रव्यूतखट्वा-धिरोहणसहोदरम् ।
भवभूमौ निपाताय, नृणां विषयसेवनम् ॥ २५२ ॥

दुःख की सीमा नहिं है ।

भाविकार्यानुसारेण, वागुच्छलति जल्पताम् ।
अस्मिन्नसारे संसारे, निसर्गेणाऽतिदारुणे ।
अवधिर्नास्ति दुःखानां, यादसामिव वारिधौ ॥ २५३ ॥

साधु की वाणी निष्फल नहीं होती है ।

ब्रुवते हि फलेन साधवो, न तु कण्ठेन निजोपयोगिताम्
कर्म कः स्वकृतमत्र न भुङ्क्ते दुर्जया हि विषया विदुषापि

बुद्धिशाली कोण है ? ।

झटिति पराशयवेदिनो हि विज्ञाः ॥ २५५ ॥

गुण कहां रहते है ।

यत्राकृतिस्तत्र गुणा वसन्ति ॥ २५८ ॥

अवश्यभव्येष्वनवग्रहग्रहा, यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयाऽनुगम्यते, जनस्य चित्तेन भृशावशात्मना ॥
कथ विधातर्मयि पाणिपङ्कजा-त्तव प्रिया शैत्यमृदुत्वशिल्पिनः।
वियोक्ष्यसे वल्लभयेति निर्गता लिपिर्ललाटंतपनिष्ठुराऽक्षरा ॥
ममैव शोकेन विदीर्णवक्षसा, त्वया विचित्राणि विपद्यते यदि ।
तदाऽस्मि दैवेन हतोऽपि हा हतः, स्फुट यतस्ते शिशवः परासवः ॥ २५९ ॥

आपत्तिकाले बुद्धि नष्ट होती है ।

असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्राय. समापन्नविपत्तिकाले धियोऽपि पुंसां मलिना भवन्ति ॥

भाग्यकी विचित्रता।

कान्तं वक्ति कपोतिकाऽऽकुलतया, नाथांतकालोऽधुना,
व्याधोऽधो धृतचापसज्जितशर., श्येनो नभो भ्राम्यति ।
इत्यस्मिन्नहिना स दष्ट इषुणा, श्येनोऽपि तेनाहत-
स्तूर्णं तौ तु यमालय प्रति गतौ, दैवी विचित्रा गति. ॥
प्रकृतेर्महाँस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पंचभ्यः पंच भूतानि ॥ २६२ ॥

पंचविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।
जटी मुंडी शिखी वापि मुच्यते नात्र संशयः ॥ २६३ ॥

असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावात् च सत्कार्यम् ॥२६४॥

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य ॥ २६५ ॥

ब्रह्माकी स्तुति ।

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।
अजाय सर्गस्थितिनाशतंत्रिणे त्रयीमयाय त्रिगुणात्मने नमः॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पंग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २६६ ॥

रागान्धकी दशा कैसी होती है ।

दृश्यं वस्तु परं न पश्यति जगत्यन्धः पुरोऽवस्थितं,
रागान्धस्तु यदस्ति तत्परिहरन् यन्नास्ति तत् पश्यति ।
कुन्देन्दीवरपूर्णचन्द्रकलशश्रीमल्लतापल्लवा-
नारोप्याशुचिराशिषु प्रियतमा-गात्रेषु यन्मोदते ॥ २६७ ॥

चाद्यऽपि यदि चोद्यं स्यात् तव चोद्यं चोद्यते मया ।
तस्माच्चोद्यं परीहार्यं नास्ति चोद्यस्य चोद्यता ॥ २६८ ॥

समय पर सब अच्छा लगता है।

अनागतं यः कुरुते स शोभते न शोभते यो न करोत्यनागतम्।
वने वसन्तस्य जराप्युपागता बिलस्य वाचा न कदापि निर्गता॥

धर्मकी त्वरितगति होती है।

अर्थेमेकोविलंबेषु विलंबेसज्जनग्रहे।
परदाराविलंबेषु धर्मस्य त्वरिता गतिः॥ २७०॥

लाप्यं शतगुणं पुण्य अजाप्य लक्षमेव च।
गुप्तं कोटिगुण पुण्यं सेवादानस्य निष्फलम्॥ २७१॥

क्षमा तपस्वी का रूप है।

कोकिलानां स्वरं रूपं नारीरूपं पतिव्रता।
विद्या रूप कुरूपाणां क्षमा रूपं तपस्विनाम्॥ २७२॥

जन्म किसका नकमा है।

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्॥ २७३॥

पण्डित कोण है।

प्रस्तावसदृश वाक्य स्वभावसदृशं प्रियम्।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः॥ २७४॥

सत्त्व कोण है।

प्राणा द्वि-त्रि-चतुःप्रोक्ताः भूतास्तु तरवः स्मृताः।
जीवाः पचेन्द्रिया ज्ञेयाः शेषाः सत्त्वाः प्रकीर्तिताः॥२७५॥

अच्छे का संग अच्छा ।

वरं न राज्यं न कुराज्यराज्यं, वरं न दारा न कुदारदाराः ।
वरं न मित्रं न कुमित्रमित्रं, वरं न शिष्यो हि कुशिष्यशिष्यः २७६

दिवा निरीक्ष्य वक्तव्यं, रात्रौ नैव च नैव च ।
विचरन्ति महाधूर्ताः, वटे वररुचिर्यथा ॥ २७७ ॥
स्त्रीणां चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ।

क्रोध निन्दा ।

क्रोधो मूलमनर्थानां क्रोधः संसारवर्धनः ।
धर्मक्षयंकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ २७९ ॥

निन्दा अच्छी नहीं है ।

मा मतिः परदारेषु परद्रव्येषु मा मतिः ।
परापवादिनी जिह्वा मा भूदेव कदाचन ॥ २८० ॥

वीर कोण है ? ।

विरला जानंति गुणा विरला पालन्ति निद्धने नेहं ।
विरला परकज्जकरा परदुक्खे दुक्खिया विरला ॥ २८१ ॥

सज्जन प्रशंसा ।

सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चंदनतरुः सुरभयति मुखं कुठारस्य ॥ २८२

विश्वास नहीं करनेलायक कौण है।

विश्वसेन्न हि सर्पस्य खड्गपाणेर्न विश्वसेत् ।
स्त्रियाश्च चलचित्ताया नृपस्यापि न विश्वसेत् ॥ २८३ ॥
मनुष्याणां पशूनां च पक्षिणां कृमिसञ्ज्ञिनाम् ।
शुश्रूषणेन धर्मस्य समुत्पत्तिः प्रजायते ॥ २८४ ॥

आयुष्यादि गर्भमें निश्चित होते हैं।

आयुः कर्म च वित्तं च, विद्या निधनमेव च ।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ २८५ ॥

विचक्षण समय देख चलते हैं।

गते शोको न कर्त्तव्यो भविष्य नैव चिन्तयेत् ।
वर्तमानेन कालेन प्रवर्त्तन्ते विचक्षणाः ॥ २८६ ॥

स्त्रीयोंको काम आठगुणा होता है।

स्त्रीणां द्विगुण आहारो लज्जा चापि चतुर्गुणा ।
साहस षट्गुणं प्रोक्त कामश्चाष्टगुणः स्मृतः ॥ २८७ ॥
कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी ।
पचभर्त्ता न पाचाली तस्याद् कुलबालिका ॥ २८८ ॥

कर्म करनेवाला फल पाता है।

मया परिजनस्यार्थे कृत कर्म सुदारुणम् ।
एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः ॥ २८९ ॥

विचित्रता कहाँ होती है ।

किं चित्रं यदि शास्त्रवेदिनिपुणो विप्रो भवेत् पंडितः ?,
किं चित्रं यदि नीतिशास्त्रनिपुणो राजा भवेद्धार्मिकः ? ।
तच्चित्रं यदि रूपयौवनवती साध्वी भवेत् कामिनी,
तच्चित्रं यदि निर्धनोऽपि पुरुषः पापं न कुर्यात् कचित् २६०

भाग्य समयपर फलता है ।

नैवाकृतिः फलति नैव कुलं न शीलं,
विद्याऽपि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा किल संचितानि,
काले फलन्ति पुरुषस्य यथेह वृक्षाः ॥ २६१ ॥

धनान्ध क्या नहीं करता ? ।

यद् दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं,
गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते ।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं,
सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥२९२॥

जिनस्तुति—

सर्वज्ञमीश्वरमनन्तमसङ्गमग्र्यं,
सार्व्वीयमस्मरमनीशमनीहमिद्धम् ।
सिद्धं शिवं शिवकरं करणव्यपेतं,
श्रीमज्जिनं जितरिपुं प्रयतः प्रणौमि ॥२९३॥

विधुकरपरिरम्भादात्मनिष्यन्दपूर्णैः,
शशिदपदुपक्कृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्राक्रियागौरवेण,
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥ ॥ २९४ ॥

शूरेषु विघ्नैकपरेषु को नरः, करस्थमप्यर्थमवाप्तुमीश्वरः ।२९५।

न काकुवाक्यैरतिवाममङ्गजं द्विषत्स याचे पवन तु दक्षिणम्
दिशापि मद्भास्मकिरत्वय तया प्रियो यया वैरविधि-
वपावधिः ॥ २९६ ॥

जं चिय विहिणा लिहियं त चिय परिणमइ सयललोयस्स ।
इइ जाणिऊण धीरा विहुरे वि न कायरा हुंति ॥ २९७ ॥

अच्छेको बुरा समझनेवाले कोण है ? ।

अज्ञानी निन्दति ज्ञानं चौरा निन्दति चन्द्रमाः ।
अधमा धर्मं निन्दन्ति मूर्खा निन्दन्ति पण्डितान् ॥२९८॥

धर्मबुद्धि ।

भत्ती जिणेसु मेत्ती जियेसु तत्ती गुरूवदेसेसु ।
पीइ सीलगुणड्ढेसु तह मति धम्मरायणम्मि ॥ २९९ ॥

बोधके पात्रको बोध देना चाहीए ।

किलात्र यो यथा जन्तुः, शक्यते बोधभाजनम् ।
कर्तुं तथैव सद्बोधो विधेयो हितकारिभिः ॥ ३०० ॥

उपदेश वयके प्रमाण अच्छा होता है ।

न चादौ मुग्धबुद्धिना, धर्मो मनसि भासते ।
कामार्थकथनाद्येन, तेषामाक्षिप्यते मन. ॥ ३०१ ॥

मद्य–तूर्य–ग्रह–ज्योतिर्भूषा–भोजनविग्रहाः ।
स्रग्दीपवस्त्रपात्री गा दशधा परिकल्पिताः ॥ ३०२ ॥

मासी की लडकी से विवाह नहिं करना चाहीए ।

मातृस्वसृसुतां भोक्तुं मोहितो येन कांक्षति ।
न मद्यतस्ततो निन्द्यं दुःखदं विद्यते परम् ॥ ३०३ ॥

मद्यपानकी स्थिति ।

मूत्रयन्ति मुखे श्वानो वस्त्रं मुष्णान्ति तस्कराः ।
मद्यमूढस्य रथ्यायां पतितस्य विचेतसः ॥ ३०४ ॥
विवेकः संयमः क्षान्तिः सत्यं शौचं दया दमः ।
सर्वे मद्येन सूद्यन्ते पावकेनेव पादपाः ॥ ३०५ ॥

निर्लज्जकी स्थिति ।

तं तं नमति निर्लज्जो यं यमग्रे विलोकते ।
रोदिति भ्रमति स्तौति रौति गायति नृत्यति ॥ ३०६ ॥

ताडनके गुण ।

लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ ३०७ ॥

पर्व–प्रशंसा ।

चतुर्दश्यष्टमी च अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ ३०८ ॥

नरक प्राप्तिका साधन ।

तैलस्त्रीमाससंभोगी पर्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥ ३०९ ॥

मूर्खताकी निशानी ।

शाठ्येन धर्मं कपटेन मित्रं परोपतापेन समृद्धिभावम्।
सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते ॥ ३१० ॥

शूर कोण है ? ।

न रणे निर्जिते शूरो, विद्यया न च पण्डितः ।
न वक्ता वाक्पटुत्वेन, न दाता धनदायकः ॥ ३११ ॥

असत्य कहा फलदायी होता है ? ।

न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥

रक्षक शत्रु कैसे होते है ? ।

ऋणकर्त्ता पिता शत्रुः माता च व्यभिचारिणी ।
भार्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ ३१३ ॥

क्लेशभाजन कोण है ? ।

पूर्वेषां यः कुलं कीर्तिं पुण्यं नाधिकतां नयेत् ।
जातेनाप्यथ किं तेन जननीक्लेशकारिणा ? ॥ ३१४ ॥

आगमकी आवश्यकता।

इह किल कलिकाले चण्डपाखण्डिकीर्णे
व्यपगतजिनचन्द्रे केवलज्ञानहीने।
कथमिव तनुभाजां संभवेद् वस्तुतत्त्वाऽ-
वगम इह यदि स्यान्नागमः श्रीजिनानाम् ॥ ३१५ ॥

लोभादि निन्दनीय है।

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः ?,
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ?।
सौजन्यं यदि किं निजैः सुमहिमा यद्यस्ति किं मंडनैः?,
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ? ॥

वैशेषिककी मुक्ति निन्दनीय है।

वरं वृन्दावने रम्ये क्रोष्टुत्वं परिवाञ्छितम्।
न तु वैशेषिकीं मुक्तिं गौतमो गन्तुमिच्छति ॥ ३१७ ॥

तीर्थ—प्रशंसा।

अन्यस्थाने कृतं पापं, धर्मस्थाने विनश्यति।
धर्मस्थाने कृतं पापं, वज्रलेपो भविष्यति ॥ ३१८ ॥

अन्यक्षेत्रे कृतं पापं, तीर्थक्षेत्रे विनश्यति।
तीर्थक्षेत्रे कृतं पापं वज्रलेपो भविष्यति ॥ ३१९ ॥

गुणी से गुणी होता है।

गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः।
सुस्वाद्यतोयाः प्रवहन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः॥
॥ ३२० ॥

नाम सान्वय कब होता है ?।

योगेन योगी सुधिया नियोगी, भोगेन भोगी प्रमितिप्रयोगैः
भूपेन सेना विनयेन सूनु-र्ज्ञानेन देही द्रविणेन गेही॥

विषयसे हानि ।

ससारपाशो नरके निवासः, शिष्टेषु हासः सुकृतस्य नाशः।
दास्यावकाश. कुयशोविलासो भवन्ति नृणा विषयाभि-
सगात्॥ ३२२॥

दुःख की अवधि।

शिशूना जननीनाशो, भार्यानाशस्तु यौवने।
वृद्धस्यात्मजनाशश्च, दुःखमेभ्य. पर न हि॥ ३२३॥

दुर्लभ क्या है ?

अर्थलुब्धकृतप्रश्नौ, सुलभौ तौ गृहे गृहे।
दाता चोत्तरदाता च, दुर्लभौ पुरुषावुभौ॥ ३२४॥

वकार प्रवीण कोण होता है ?।

व्यापारे वाङ्मये वादे, विज्ञाने विनये व्रते।
पद्स्वमीषु वकारेषु, धीमानेव पुरस्सरः॥ ३२५॥

योग्यकी प्रति योग्य ।

शठं प्रति शाठ्यं कुर्यात्, आदरं प्रति चादरं ।
त्वया स मुच्यते पत्त, मया च नाम्यते शिरः ॥३२६॥

शृंगारवर्णन ।

क्षौरं मज्जनवस्त्रभालतिलकं गात्रेषु गंधार्चनम् ।
कर्णौ कुण्डलमुद्रिका च मुकुटं पादौ च चर्मायतौ ।
हस्तं खड्गकटारकं कटिछुरि विद्याविनीतं मुखे ।
ताम्बूलं करकंकणं चतुरता शृंगारके षोडशः ॥ ३२७ ॥

परपीडा पाप है ।

अष्टादशपुराणेषु, व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय, पापाय परपीडनम् ॥ ३२८ ॥

शूरवीरता ।

अनेन तव पुत्रस्य, प्रसुप्तस्य वनान्तरे ।
शिखामाक्रम्य पादेन, खड्गेन पातितं शिरः ॥ ३२९ ॥

वनिकपुत्र ।

आदौ नम्रः पुनर्नम्रः, कार्यक्लेशेषु निष्ठुरः ।
कार्यं कृत्वा पुनर्नम्रः, शिश्नुतुल्यवणिक्सुतः ॥ ३३० ॥

नरक-प्रतिति ।

यत्र नास्ति मनःप्रीतिः, यत्र न प्रियदर्शनम् ।
यत्रास्ति परतन्त्रत्वं, तद्राज्यं नरकं विदुः ॥ ३३१ ॥

स्वभाव प्रशंसा ।

एकतडागे यद्यपि, पिबति भुजङ्गो जलं तथा गौश्च ।
परिणमति विष सर्पे, तदेव गवि जायते क्षीरम् ॥२३२॥

पुण्य का फल ।

सती सुरूपा सुभगा विनीता, प्रियाभिरामा सरलस्वभावा ।
सदा सदाचारविचारदक्षा, सा प्राप्यते पुण्यवशान्नरेण॥

भार्या कैसी होनी चाहिए ? ।

कार्येषु मंत्री कर्मेषु दासी, भोज्येषु माता शयनेषु रम्भा ।
मनोऽनुकूला क्षमया धरित्री, षड्गुणभार्या कुलमुद्धरति॥
हंसादूरनिवासिनो वसुमती प्रादुर्भवत्कन्दला,
पद्मानां निधनं जडैः परिचयः पङ्कातिरेकः पथि ।
जातः स्वैरविहारिणो द्विरसनाः शूरप्रतापक्षयः
जीमूतो हि करालकेलिकलितस्तन्मूर्त्तिभाजामभूत् ॥
सूर्यं भर्त्तारमुत्सृज्य, जीमूतं मारुतं गिरिं ।
स्वयोनिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥२३६॥

महाभारत ।

अत्र द्रोणशत दग्धं, पाण्डवाना शतत्रयम् ।
दुर्योधनसहस्र च, कर्णसख्या न विद्यते ॥ २३७ ॥

गङ्गास्तुति ।

मातः शैलसुता सपत्निवसुधा शृगारहारावलिः,
स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं प्रार्थये ।

त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्ध्यानध्यातः सदा,
त्वन्नामस्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥
सपत्नीदर्शनं दूरे, श्रुतं नामाप्यसौख्यदं ।
गङ्गा चिराय नो तुष्टा, श्रुतं शैलसुतेति यत् ॥ ३३९ ॥

प्रश्न ।

किं तद्वर्णचतुष्टयेन वनजं वर्णैस्त्रिभिर्भूषणं ।
आद्यैः के न महीद्वयेन विहगो मध्ये द्वये प्राणदः ।
व्यस्ते गोत्रतुरङ्गचारिरखिलं प्रान्ते च संप्रेषणं ।
ये जानन्ति विचक्षणाः क्षितितले तेषामहं किंकरः ॥

जीवदया प्रशंसा ।

तत् श्रुतं यातु पातालं, तच्चातुर्यं विलीयताम् ।
ते विशन्तु गुणा वह्नौ, यत्र जीवदया नहि ॥ ३४१ ॥

पापकी अतिरेकता ।

साधुस्त्रीबालवृद्धानां, पीडितानां च केनचित् ।
उल्लङ्घने च तीर्थानां, विमानं स्थिरतां भजेत् ॥ ३४२ ॥

निवृत्ति फलदायी है ।

न मांसभक्षणे दोषो, न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ ३४३ ॥

नारी निन्दा ।

दर्शने हरते चित्तं, स्पर्शने हरते बलम् ।
संगमे हरते वीर्यं, नारी प्रत्यक्षराक्षसी ॥ ३४० ॥

सज्जन-प्रशंसा ।

तो सुमणो जइ सुमणो भावेण य जइ न होइ पावमणो ।
सयणे य जणे य समो समो य माणावमाणेसु ॥३४१॥

नत्थि यसि कोइ वेसो पिओ व सव्वेसु चेव जीवेसु ।
एएण होइ समणो एसो अन्नोऽवि पज्जाओ ॥ ३४२ ॥

उन्मत्तप्रेमसरंभादारम्भन्ते यदङ्गनाः ।
तत्र प्रत्यूहमाधातु, ब्रह्मापि किल कातरः ॥ ३४३ ॥

भाग्य-प्रशंसा ।

भाग्य फलति सर्वत्र, न च विद्या न च पौरुषम् ।
समुद्रमथनाल्लेभे, हरिर्लक्ष्मीं हरो विषम् ॥ ३४४ ॥

कर्मकी प्रधानता ।

कर्मणो हि प्रधानत्वं, किं कुर्वन्ति शुभा ग्रहाः ।
वसिष्ठदत्तलग्नोऽपि, रामः प्रव्रजितो वने ॥ ३४५ ॥

श्रावककी व्याख्या ।

श्रद्धालुता श्राति पदार्थचिन्तनाद्,
धनानि पात्रेषु वपत्यनारतम् ।
किरत्यपुण्यानि सुसाधुसेवनाद्—
अथापि त श्रावकमाहुरंजसा ॥ ३४६ ॥

कामनिन्दा ।

कामोऽय नरके दूत , कामो व्यसनसागरः ।
कामो विपल्लताकन्दः, कामःपापद्रुमारणिः ॥ ३४७॥

अर्थं धर्मं च मोक्षं च वेश्मेव गृहमेधिनः ।
आसादितप्रवेशोऽयं खनत्याखुरिव स्मरः ॥ ३४८ ॥

कुसंसर्ग निन्दा ।

कुसंसर्गात्कुलीनानां भवेदभ्युदयः कुतः ।
कदली नंदति कियद्‍बदरीतरुसंनिधौ ॥ ३४९ ॥

अधर्म निन्दा ।

चक्रवर्त्यप्यधर्मः सन् जन्म तल्लभते पुनः ।
कदन्नमपि संप्राप्तं यत्र राज्याय मन्यते ॥ ३५० ॥
महाकुलप्रसूतोऽपि धर्मोपार्जनवर्जितः ।
भवेद्भवान्तरे श्वेव परोच्छिष्टान्नभोजनः ॥ ३५१ ॥
धर्महीनो द्विजन्मापि नित्यं पापानुबन्धकः ।
बिडाल इव दुर्वृत्तो म्लेच्छयोनिषु जायते ॥ ३५२ ॥
बिडालव्यालशार्दूलश्येनगृध्रादियोनिषु ।
भवन्ति भूयिष्ठभवा भविनो धर्मवर्जिताः ॥ ३५३ ॥
धर्महीनाः क्रमयः स्युरसकृच्छकृदादिषु ।
कुक्कुटादेर्लभन्ते च चञ्चुचरणताडनम् ॥ ३५४ ॥

कर्मका फल ।

किं च प्रत्यक्षमीक्ष्यन्ते जलस्थलखचारिणः ।
प्राणिनो विविधं दुःखमापेदानाः स्वकर्मजम् ॥ ३५५ ॥
तत्र वारिचराः स्वैरं खादन्त्यन्योन्यमुत्सुकाः ।
धीवरैः परिगृह्यन्ते गिल्यन्ते च बकादिभिः ॥ ३५६ ॥

विश्वासघात ।

विश्वासप्रतिपन्नानां, वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्ताना, हन्तुः किं नाम पौरुषम् ॥२५७॥

मित्रद्रोही निन्दा ।

सेतुं गत्वा समुद्रस्य, गङ्गासागरसङ्गमे ।
ब्रह्महा मुच्यते पापैः, मित्रद्रोही न मुच्यते ॥ २५८ ॥

नरक कौन जाता है ? ।

मित्रद्रोही कृतघ्नश्च, स्तेयी विश्वासघातकः ।
चत्वारो नरकं यान्ति, यावच्चन्द्रदिवाकरौ ॥ २५९ ॥

दान महिमा ।

राजस्त्व राजपुत्रस्य, यदि कल्याणमिच्छसि ।
देहि दानं सुपात्रेषु, गृही दानेन शुध्यति ॥ २६० ॥

कौनसे शकुन फलदायी हैं ? ।

बुद्धिपूर्वकं शकुनं तथा न फलद यथाकस्मिकम् ।

गुरुप्रशसा ।

देवगुरुप्रसादेन, जिह्वाग्रे मे सरस्वती ।
तेनाहं नृप जानामि, भानुमत्यास्तिलकं यथा ॥ २६२ ॥

विपत्तिका मूल क्या है ? ।

कूलच्छाया दुर्जनाश्च, विष च विषयास्तथा ।
ददशूकाश्च जायन्ते, सेव्यमाना विपत्तये ॥ २६३ ॥

तृष्णा ।

आसंसारं सरिन्नाथः किं तृप्यति सरिज्जलैः ।
सरित्पतिपयोभिर्वा किमेप वडवानलः ॥ ३६४ ॥
अन्तको जन्तुभिः किं वा, किमेधोभिर्हुताशनः ।
सुखैर्वैपयिकैरात्मा किं तथैव कदाचन ॥ ३६५ ॥
सत्कारयन्ति ह्यात्मानं, कृत्वाप्यागांसि मायिनः ।
अत्युग्रपुण्यपापानां, फलमत्रैव जन्मनि ॥ ३६६ ॥

पक्षपाती ।

सहजान्धदृशः स्वदूर्नये परदोपेक्षणदिव्यचक्षुषः
स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥३६७॥
त्यजन्त्यसून्शर्म च मानिनो वरं,
त्यजन्ति न त्वेकमयाचितव्रतम् ॥ ३६८ ॥
तत्र दायकशुद्धं तन्न्याय्यार्थो ज्ञानवान् सुधीः ।
निराशंसोऽननुतापी दायकः प्रददाति यत् ॥ ३६९ ॥

भाग्यहीनकी दशा ।

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके,
वाञ्छन् देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः,
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ।३७०।

कायाकी शोभा कीससे है ? ।

श्रोत्रं श्रुतेनैव न कुण्डलेन, दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणापराणां, परोपकारैर्न तु चन्दनेन ।३७१।

वणिक अवस्था ।

कार्यं सर्परूपेणापि वणिजा न हि पौरुषम् ।
वणिजो लोकसामान्येऽप्यर्थे साशंकवृत्तयः ॥ ३७२ ॥

जरावस्था ।

पुरुषस्य जरा पथा अश्वानां मैथुनं जरा ।
अमैथुन जरा स्त्रीणां, वस्त्राणां वमलं जरा ॥ ३७३ ॥

कार्य विना दूसरेके घर जाना निन्दनीय है ।

विना कार्येण ये मूढा, गच्छन्ति परमन्दिरम् ।
अवश्य लघुतां यान्ति, कृष्णपक्षे यथा शशी ॥३७४॥

मेदपाटके मनुष्यकी प्रशंसा ।

निर्विवेका मरुस्थल्या, निर्लज्जा गुर्जरे जनाः ।
निर्दया मालवे प्रोक्ता, मेदपाटे त्रयो न हि ॥ ३७५ ॥

यह छ शास्त्रवर्जित है ।

अलसो मन्दबुद्धिश्च, सुखितो व्याधितस्तथा ।
निद्रालु कामलुब्धश्च, षडेते शास्त्रवर्जिताः ॥ ३७६ ॥

समानता बुरी है ।

राजा राजानमालोक्य, वैद्यो वैद्य नटो नटम् ।
भिक्षुको भिक्षुक दृष्ट्वा, श्वानवत् घुर्घुरायते ॥ ३७७ ॥

कीसके लीये कैसा धन अच्छा है ।

ब्राह्मणानां धन विद्या, क्षत्रियाणा धन धनुः ।
ऋषीणा च धन सत्य, योषिता यौवन धनम् ॥३७८॥

परमात्मा कोण है ?।

दूषणेभ्यो विनिर्मुक्तो-ऽष्टादशभ्यो भवेद्धि यः ।
प्रातिहार्याष्टकैर्युक्तः, परमात्मा स उच्यते ॥ ३७९ ॥

श्री आदीश्वर स्तुति ।

श्रीशत्रुंजयभूषणं जिनवरं श्रीनाभिभूपात्मजं,
सेन्द्रैर्नाकिवरैर्नरेन्द्रनिकरैर्भक्त्या प्रणुन्नैर्नतम् ।
ज्ञानं यस्य त्रिकालवस्तुविषयं लोकेतराभापकं,
सर्वेषां हितदं कृपारसमयं वन्दे तमादीश्वरम् ॥३८०॥

विद्या-प्रशंसा ।

विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो,
धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा ।
सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं,
तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु ॥३८१॥

लोभनिन्दा ।

अतिलोभो न कर्त्तव्यश्चक्रं भ्रमति मस्तके ।
अतिलोभप्रसादेन, सागरः सागरं गतः ॥ ३८२ ॥

मालवदेश प्रशंसा ।

मालवे पञ्चरत्नानि कंट भाटा पर्वताः ।
चतुर्थं वस्त्रहरणं पञ्चमं प्राणघातकाः ॥ ३८३ ॥

अज्ञान-निंदा ।

येषां न विद्या न तपो न दानं
ज्ञानं न शीलं न गुणो न धर्मः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥ ३८४ ॥

नरक प्राप्ति कैसे होती है ? ।

तिलसिक्तेन मात्रेण, अन्नं भुञ्जन्ति ये नराः ।
ते नरा नरकं यान्ति, यावच्चन्द्रदिवाकरौ ॥ ३८५ ॥

वीरस्तुति ।

धर्मोपदेशननिधौ रदनाच्छकान्तिः,
सान्द्रोद्यती जनतनूर्विशदीचकार ।
अन्तर्विशुद्धिकरगीर्विजिगीषयेव,
यस्य श्रियं जिनपतिस्तनुतात् स वीरः ॥ ३८६ ॥

विना अग्निका दाह ।

पुत्रश्च मूर्खो विधवा च कन्या,
शठं च मित्रं चपलं कलत्रम् ।
विलासकालेऽपि दरिद्रता च,
विनाऽग्निना पञ्च दहन्ति देहम् ॥ ३८७ ॥

सज्जनका सज्जनत्व ।

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।

विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ ३८८ ॥

धूर्त्त कौन है ? ।

नराणां नापितो धूर्तः, पक्षिणां चैव वायसः ।
चतुष्पदे शृगालस्तु, स्त्रीणां धूर्ता च मालिनी ॥३८९॥

विद्या आदि का मूळ क्या ?

विज्झामूलं च विनओ, लच्छीमूलं तहा अवीसासो ।
भवमूलं महिलाओ, दानमूलं च कित्तीओ ॥ ३९० ॥

नरककी आगाही ।

अत्यन्तकोपः कटुका च वाणी,
दरिद्रता च स्वजनेषु वैरम् ।
नीचप्रसंगः कुलहीनसेवा,
चिह्नानि देहे नरकास्थितानि ॥ ३९१ ॥

कैसी लक्ष्मी अच्छी है ? ।

किं तया क्रियते लक्ष्म्या, या वधूरिव केवला ।
या च वेश्येव सामान्या, पथिकैरुपभुज्यते ॥ ३९२ ॥

निन्दनीय क्या है ? ।

किं गीतं कण्ठहीनस्य, किं रूपं गुणहीनस्य ।
किं धनं दानहीनस्य, मानहीनस्य भोजनम् ॥३९३॥

वृद्धत्व प्रशंसा ।

वयोवृद्धास्तपो वृद्धा, राजवृद्धा बहुश्रुताः
सर्वेऽपि धनवृद्धस्य, द्वारे तिष्ठन्ति किङ्कराः ॥ ३९४ ॥

ज्यादा भोजन और बोलना मरण के लिये है ।

अतिभुक्तमतीवोक्तं, प्राणिनां मरणप्रदम् ।
न कार्योऽत्र स्मयो येन, बहुरत्ना वसुंधरा ॥ ३९५ ॥

युक्ति प्रशंसा ।

उपायेन प्रकर्तव्यं, न शक्यं यत्पराक्रमैः ।
अभीप्सितानि सिध्यन्ति, जने हास्यं न जायते ॥३९६॥

दश अवतार ।

मत्स्यः कूर्मो वराहश्च, नरसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च, बुद्धः कल्की च ते दश ॥३९७॥

सज्जनो के लक्षण ।

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः,
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान्गुणान्,
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥३९८॥
आसीदिदं तमोभूत-मप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वतः ॥ ३९९ ॥

तस्मिन्नेकार्णवीभूते, नष्टस्थावरजङ्गमे ।
नष्टामरनरे चैव, प्रनष्टोरगराक्षसे ॥ ४०० ॥
केवलं गह्वरीभूते, महाभूतविवर्जिते ।
अचिन्त्यात्मा विभुस्तत्र, शयानस्तप्यते तपः ॥४०१॥
तत्र तस्य शयानस्य, नाभेः पद्मं विनिर्गतम् ।
तरुणरविमण्डलनिभं, हृद्यं काञ्चनकर्णिकम् ॥४०२॥
तस्मिन् पद्मे भगवान्, दण्डी यज्ञोपवीतसंयुक्तः ।
ब्रह्मा तत्रोत्पन्नस्तेन जगन्मातरः सृष्टाः ॥ ४०३ ॥
अदितिः सुरसङ्घानां दितिरसुराणां मनुर्मनुष्याणाम् ।
विनता विहङ्गमानां माता विश्वप्रकाराणाम् ॥ ४०४ ॥
कद्रूः सरीसृपाणां सुलसा माता च नागजातीनाम् ।
सुरभिश्चतुष्पदानामिला पुनः सर्वबीजानाम् ॥ ४०५ ॥

ईश्वर सर्वव्याप्त है ।

जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ।
ज्वालामालाकुले विष्णुः, सर्वं विष्णुमयं जगत् ॥४०६॥

ईश्वर सर्वत्र है ।

अहं च पृथिवी पार्थ ! वाय्वग्निजलमप्यहम् ।
वनस्पतिगतश्चाहं, सर्वभूतगतोऽप्यहम् ॥ ४०७ ॥

कामदेव कैसा नीच है ।

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलः,
क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः ।

व्रणैः पूयक्लिन्नैः कृमिकुलशतैराचिततनुः,
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥४०८॥

साधुकी निन्दा नहीं करना।

देवनिन्दा च दारिद्री, गुरुनिन्दा च पातकी।
धर्मनिन्दा भवेत् कुष्ठी, साधुनिन्दा कुलक्षयः ॥४०९॥

यह सब नरकमें जाते हैं।

स्वामिद्रोही कृतघ्नश्च, येन (यो हि) विश्वासघातकः।
ते नरा नरकं यान्ति, यावच्चन्द्रदिवाकरौ ॥ ४१० ॥

मूर्ख हित करनेवाला होनेपर मित्रके लायक नहीं है।

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः।
वानरेण हतो राजा, विप्रश्चौरेण रक्षितः ॥ ४११ ॥

धर्मकथा से मूर्ख को लाभ नहीं होता।

किं मौक्तिहार न च मर्कटस्य,
मिष्टान्नपानं न च गर्दभस्य।
अन्धस्य दीप बधिरस्य गीतं।
मूर्खस्य किं धर्मकथाप्रसंगः ॥ ४१२ ॥

कौनसा द्रव्य उत्तम है।

उत्तमं स्वार्जित द्रव्यं, मध्यमं पितुरर्जितम्।
अधम मातृवित्तं च, स्त्रीवित्तं (स्वसुरवित्त)
चाधमाधमम् ॥ ४१३ ॥

दरिद्रको मान नहीं मीलता ।

आदरं लभते लोके, न क्वापि धनवर्जितः ।
कान्तिहीनो यथा चन्द्रो, वासरे न लभते प्रथाम् ॥४१४॥

दुर्जनका संग नहीं करना ।

दुर्जनः परिहर्तव्यो, विद्यया भूषितोऽपि सन् ।
मणिना भूषितः सर्पः, किमसौ न भयङ्करः ॥ ४१५ ॥

प्राण और धनको कोण हरण करता है ?

वैद्यराज ! नमस्तुभ्यं, यमराजसहोदर ।
यमस्तु हरते प्राणान् , त्वं च (वैद्यः) प्राणान्
धनानि च ॥ ४१६ ॥

मांसाहारी क्रूर होता है ।

कामलुब्धे कुतो लज्जा, धर्महीने कुतः क्रिया ।
मद्यपाने कुतः शौचं, मांसाहारे कुतो दया ॥ ४१७ ॥

कामावस्था ।

मुण्डं शिरो वदनमेतदनिष्टगन्धं,
भिक्षाशनेन भरणं च हतोदरस्य ।
गात्रं मलेन मलिनं गतसर्वशोभं,
चित्रं तथापि मनसो मदनेऽस्ति वाञ्छा ॥ ४१८ ॥

वचन से वदलना न चाईए ।

राज्यं यातु श्रियो यान्तु, यान्तु प्राणा विनश्वराः ।
या मया स्वयमेवोक्ता, वाचा मा यातु शाश्वती ॥४१९॥

निर्गुणी से क्या प्रयोजन ?

गुणेषु यत्नः क्रियतां, किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभि-र्गावः क्षीरविवर्जिताः ॥४२०॥

निन्दासे दूर रहना चाहीए ।

लोकाचारानुवृत्तिश्च, सर्वत्रौचित्यपालनम् ।
प्रवृत्तिर्गर्हिते नेति, प्राणैः कण्ठगतैरपि ॥४२१॥

शिवभक्ति. ।

यत्र जीवः शिवस्तत्र न भेदः शिवजीवयोः ।
न हिंस्यात् सर्वभूतानि शिवभक्तिचिकीर्षकः ॥ ४२२ ॥

मोक्षको सब कोई चाहता है ।

यथामृतरसास्वादी, नान्यत्र रमते जन ।
तथा मुक्तिसुखाभिज्ञो, रज्यते न सुखान्तरे ॥ ४२३ ॥

कम निद्रावालेका धन्य है ।

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे,
कान्तापयोधरयुगे रतिखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती,
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ ४२४ ॥

उद्यमके बिना सब नकमा है ।

उद्यमेन विना राजन् . सिद्ध्यन्ति न मनोरथाः ।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ ४२५ ॥

कुलीन पुरुष नीतिको नहिं छोडते ।

वनेऽपि सिंहा मृगमांसभक्ष्या, बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता, न नीतिमार्गं परिलङ्घयन्ति, ॥

कालवशात् बडा छोटा और छोटा बढा होता है ।

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं,
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
नाट्याचार्य्यकमर्जुनस्य पतनं संचिन्त्य लङ्केश्वरे,
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥४२७॥

पुरुषका पतन कव होता है ।

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां,
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते,
यावल्लीलावतीनां हृदि न धृतिमुषो दृष्टिबाणाः पतन्ति॥४२८॥

दान से अच्छा सुख मीलता ।

न्यस्तो हन्त यदेन्द्रजालविदुषा मोहेन बन्धो दृशां,
दृष्टाः काञ्चन चन्द्रचम्पकनिभाकारास्तदा योषितः ।
सम्प्रत्यत्र विवेकमन्त्रपयसा ध्वस्ते यथावस्थितं,
तत्कायेषु वसात्वगस्थिपिशितस्तोमादि संलक्ष्यते ॥४२९॥
वस्त्रं पात्रं भक्तपानं पवित्रं, स्थानं ज्ञानं भेषजं पुण्यहेतुः ।
ये यच्छन्ति स्वात्मभावैकसारं ते सर्वाङ्गं सौख्यमासादयन्ति

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो,
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं,
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्॥४३१॥

तीर्थयात्रा कीस को फलदायी होती है ?

मद्यमांसाशनं रात्रौ भोजनं कन्दभक्षणम् ।
ये कुर्वन्ति वृथा तेषां तीर्थयात्रा जपस्तपः ॥ ४३२ ॥

वृथा चैकादशी प्रोक्ता वृथा जागरणं हरेः ।
वृथा च पौष्करी यात्रा वृथा चान्द्रायणं तपः ॥ ४३३ ॥

देवानन्दोदरे श्रीमान्, श्वेतपक्ष्यां सदा शुचिः ।
अवतीर्णोऽसि मासस्याषाढस्य शुचिता ततः ॥ ४३४ ॥

त्रिशला सर्वसिद्धेच्छा त्रयोदश्यामभूद्यतः ।
तवावतारस्तेनैषा सर्वसिद्धा त्रयोदशी ॥ ४३५ ॥

शुक्लत्रयोदश्यां यश्चापल मेरुं प्रचालयन् ।
चित्रं कृतवांस्तद्योगाच्चैत्रमासोऽपि कथ्यते ॥ ४३६ ॥

यस्याद्यदशम्या दुर्ग-मोक्षमार्गस्य शीर्षकम् ।
चारित्रमादतं युक्ता, मासोऽस्य मार्गशीर्षता ॥ ४३७ ॥

दशम्यां यस्य शुक्लाया, केवलश्रीरहो त्वया ।
व्याहृता तेन मासोऽस्य, युक्ता माधवता प्रभो ! ॥ ४३८॥

तव निर्वाणकल्याण, यद्दिनमागमिष्यति ।
तवो न वेधि नाथोऽहं, मादृशोऽप्यच्यवेदिन ॥ ४३९ ॥

सर्वदेव नमस्कार ।

भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ ४४० ॥

जुगुप्साभयाज्ञाननिद्राविरत्यंगभूहास्यसुखैः ।
द्वेषमिथ्यात्वरागैर्नयोऽस्त्यरत्यरत्यरायैः ॥ ४४१ ॥
सिषेवे स एव परात्मगतिः मे जिनेन्द्रः ।

ईश्वर सब के लीये समान है, मान्यता भिन्न २ है ।

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदांतिनो,
बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः,
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ४४२

काम क्या नहीं करता ?

ये रामरावणादीनां, संग्रामाग्रस्तमानवाः ।
श्रूयन्ते स्त्रीनिमित्तेन, तेपु कामो निबन्धनम् ॥ ४४३ ॥

स्त्री का विश्वास कोण कर सकता ।

दुर्ग्राह्यं हृदयं यथैव वदनं यद्दर्पणान्तर्गतं,
भावः पर्वतमार्गदुर्गविरमः स्त्रीणां न विज्ञायते ।
चित्तं पुष्करपत्रतोयतरलं, नैकत्र संतिष्ठते,
नार्यो नाम विषाङ्कुरैरिव लता दोषैः समं वर्धिताः ॥४४४॥
कश्चित् काननकुञ्जरस्य भयतो नष्टः कुबेरालयः,
शाखासु ग्रहणं चकार फणिनः कूपे त्वधो दृष्टवान् ।

वृद्धो वारणकम्पितोऽथ मधुनो विन्दुर्निंतो लेढि सः,
लुब्धश्चामरशब्दितोऽपि न ययौ ससारसक्तो यथा ४४५

प्रशसा किसकी करनी चाहीये ।

लोकेभ्यो नृपतिस्ततोऽपि च वरश्चक्री ततो वासवः ।
सर्वेभ्योऽपि जिनेश्वरः समधिको विश्वत्रयीनायकः ॥
सोऽपि ज्ञानमहोदधिं प्रतिदिन सङ्घ नमस्यत्यहो ।
वीरस्वामिवदुन्नतिपदं यः स प्रशस्यः चितौ ॥४४६॥

विधि की बलिहारी ।

शशिनि खलु कलङ्कः कण्टकाः पद्मनाले,
युवतिकुचनिपात. पक्कता केशजाले ।
जलधिजलमपेय पण्डिते निर्धनत्वं,
वयसि धनविवेको निर्विवेको विधाता ॥ ४४७ ॥

कवि कालिदास प्रति उनकी स्त्रीका प्रश्न ।

अनिलस्यागमो नास्ति द्विपद नैव दृश्यते ।
वारिमध्ये स्थितं पद्म कम्पित केन हेतुना ॥ ४४८ ॥

कवि कालिदास का प्रत्युत्तर ।

पावकोच्छिष्टवर्णोऽयं, शर्वरीकृतबन्धनः ।
मोक्ष न लभते कान्ते, ! कम्पित तेन हेतुना ॥ ४४९ ॥

सामान्य हास्य भी उपयोगी है ।

गुरुणापि समं हास्य, कर्त्तव्य कुटिल विना ।
परिहासविहीनस्य, जन्तोर्जन्म निरर्थकम् ॥ ४५० ॥

महासती कैसी होती है।

पङ्गुं मूकं च कुब्जं च, कुष्ठाङ्गं व्याधिपीडितम्।
आपत्सु च गतं नाथं, न त्यजेत् सा महासती ॥४५१॥

सज्जन और दुर्जन का फरक।

तुष्यन्ति भोजनैर्विप्रा, मयूरा घनगर्जितैः।
साधवः परकल्याणैः, खलाः परविपत्तिभिः ॥ ४५२ ॥

तप से क्या होता है?

सुखस्य दुःखस्य न कोऽपि दाता, परो ददातीति कुबुद्धिरेषा।
पुराकृतं कर्म तदेव भुज्यते, दुष्कर्म नूनं तपसा च हीयते।

बुद्धिशाली इतनी वस्तु गोपाता है।

अर्थनाशं मनस्तापं, गृहे दुश्चरितानि च।
वञ्चनं चापमानं च, मतिमान्न प्रकाशयेत् ॥ ४५४ ॥

सच्चा पाण्डित्य क्या है।

स्वकार्यपरकार्येषु, यस्य बुद्धिः स्थिरा भवेत्।
तस्य चेवेह पाण्डित्यं, शेषाः पुस्तकवाचकाः ॥ ४५५ ॥

गुरु की अवज्ञा करनेवाले की क्या दशा होती है।

एकाक्षरप्रदातारं, यो गुरुं नैव मन्यते।
श्वानयोनिशतं गत्वा, याति चाण्डालयोनिषु ॥ ४५६ ॥

नीच पुरुष की उपर सज्जनो का उपकार।

अनर्थाय भवेन्नीचेषूपकारः सतामपि।
पक्षान्तररक्षितौ हंसमाखुः शीघ्रममारयत् ॥ ४५७ ॥

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया,
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥४६२॥
शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥४६३॥
सर्वाभिरपि नैकोऽपि तृप्यत्येकापि नाखिलैः,
द्वितीयं द्वावपि द्विष्टः धिग् धिक्कायविडम्बनाम् ॥४६४॥

कामी के लिये और क्या अच्छा होता है ?

मांसासृग्पूतिपिण्डेषु, चर्मणा वेष्टितेषु वै।
पयोधरेषु रागान्धा ब्रूत किं रामणीयकम् ॥ ४६५ ॥

जैनको यह पालन करना चाहीए।

अहिंसा सत्यमस्तेयं, ब्रह्मचर्यमसंचयः।
मद्यमांसमधुत्यागो, रात्रिभोजनमेव च ॥ ४६६ ॥

इन के पर देव भी नाराज होते है।

चौराणां वञ्चकाणां च, परदारापहारिणाम्।
निर्दयानां च निःस्वानां, न तुष्यन्ति सुराः कदा ॥४६७॥

कर्मरिपु से कोई भी मुक्त नहीं हो सकता।

राजानः खेचरेन्द्राश्च केशवाश्चक्रवर्तिनः।
देवेन्द्रा वीतरागाश्च, मुच्यन्ते नैव कर्म्मणा ॥ ४६८ ॥

सब शत्रु से कामशत्रु बहोत खराब है ।

दुर्जयोऽयमनंगो हि, विषमा कामवेदना ।
कृत्याकृत्य न जानाति, भूतग्रस्त इव भ्रमेत् ॥ ४६९ ॥

शरीर अनित्य है, धर्म नित्य है ।

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः, कर्त्तव्यो धर्मसङ्ग्रहः ॥ ४७० ॥

लक्ष्मीदेवी इतने की पास नहीं जाती ।

कुचेलिनं दन्तमलावधारिणं, बह्वाशनं निष्ठुरवाक्यभाषिणम् ।
सूर्योदये चास्तमने च शायिन, विमुञ्चति श्रीर्यदि चक्रपा-
णिनम् ॥ ४७१ ॥

सम्यक्त्व क्या है ?

या देवे देवता बुद्धि-र्गुरौ च गुरुतामतिः ।
धर्मे च धर्मधीः शुद्धा, सम्यक्त्वमिदमुच्यते ॥ ४७२ ॥

धनका व्यय कहा करना ?

व्याजे स्याद् द्विगुणं वित्तं, व्यवसाये चतुर्गुणम् ।
क्षेत्रे शतगुण प्रोक्तं, पात्रेऽनन्तगुण तथा ॥ ४७३ ॥

न्यायी पुरुष क्या करता है ।

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु,
लक्ष्मी· समाविशतु गच्छतु वा यथेष्टम् ॥ ४७४ ॥
अद्यैव वा मरणमस्तु युगान्तरे वा,
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ४७५ ॥

सज्जनों के संसर्ग का फल ।

महानुभावसंसर्गः, कस्य नोन्नतिकारकः ।
रथ्याम्बु जाह्नवीसङ्गात्रिदशैरपि वन्द्यते ॥ ४७६ ॥

दुर्जनोंकी संगति नहीं करना ।

वरं पर्वतदुर्गेषु, भ्रान्तं वनचरैः सह ।
न मूर्खजन संपर्कः, सुरेन्द्रभवनेष्वपि ॥ ४७७ ॥

रात्रिभोजन नरक का द्वार है ।

चत्वारो नरकद्वारा, प्रथमं रात्रिभोजनम् ।
परस्त्रीसेवनं चैव, संधानानन्तकायकम् ॥ ४७८ ॥

पात्र देखके उपदेश चाहीए ।

यो यथा येन बुध्येत तं तथा बोधयेद् बुधः
दग्धकाकादिजटिनो यथा विज्ञेन बोधिताः ॥ ४७९ ॥

वेश्या अग्नि की ज्वाला है ।

वेश्यासौ मदनज्वाला, रूपेन्धनसमेधिता ।
कामिभिर्यत्र हूयन्ते, यौवनानि धनानि च ॥ ४८० ॥

भाग्य की परीक्षा दुसरे स्थानमें जाके करनी चाहीए ।

गन्तव्यं नगरशते विज्ञानशतानि वीक्षितव्यानि ।
नरपतिशतं च सेव्यं स्थानान्तरितानि भाग्यानि ॥४८१॥

यह पांच पिता समान है ।

जनकश्चोपनेता च, यश्च विद्यां प्रयच्छति ।
अभयदाता भयत्राता, पञ्चैते पितरः स्मृताः ॥४८२॥

साधारण द्रव्य से क्या फायदा ।

किं तया क्रियते लक्ष्म्या, या वधूरिव केवला ।
या च वेश्येव सामान्या, पथिकैरुपभुज्यते ॥ ४८३ ॥

युवावस्था सब से श्रेष्ठ है ।

यौवनं सफलं भोगैः, भोगाः स्युः सफला धनैः ।
तद्विना मानुषं जन्म, जायते वनपुष्पवत् ॥ ४८४ ॥

हासी से कर्मबन्ध होता है ।

हसन्तो हेलया जीवा, कर्मबन्धं प्रकुर्वते ।
तद्विपाको हि कार्येषु, रुदद्भिरपि भुज्यते ॥ ४८५ ॥

गुणहीन शोभास्पद नहीं होता है ।

विभूतिस्त्यागशून्येव, सत्यशून्येव भारती ।
विद्या विनयशून्येव, न भाति स्त्री पतिं विना ॥ ४८६ ॥
पञ्चमो लोकपालस्त्वं, कृपालुः पृथिवीपतिः ।
दैवेनाहं पराभूतः, आगतः शरणं तव ॥ ४८७ ॥
दरिद्राधिगमे जीव-देहस्थाः पञ्च देवताः ।
सद्यो निर्गत्य गच्छन्ति, श्री-ह्री-धी-कान्ति-कीर्त्तयः॥४८८॥
धनाढ्यता राजकुले च मानं, प्रियानुकूला तनयो विनीतः ।
धर्मे मतिस्सज्जनसंगतिश्च, षट् स्वर्गलोका जगतीतलेऽपि ॥४८९॥

स्वार्थ नहीं छोडना चाहीए ।

अपमानं पुरस्कृत्य, मानं कृत्वा च पृष्ठतः ।
स्वार्थमालम्बयेत्प्राज्ञः, स्वार्थभ्रंशो हि मूर्खता ॥४९०॥

मूर्ख पुत्र से कुलका नाश होता है।

कुपुत्रेण कुलं नष्टं, जन्म नष्टं कुभार्यया।
कुभोजनेन दिनं नष्टं, पुण्यं नष्टं कुकर्मतः ॥ ४९१ ॥

धर्म के विना सुख नहीं मीलता।

ग्रामो नास्ति कुतः सीमा, धर्मो नास्ति कुतः सुखम्।
दानं नास्ति कुतः कीर्तिर्भार्या नास्ति कुतः सुतः ॥४९२॥

शास्त्र बुद्धिमानों का जीवन है।

जीवन्ति सुधियः शास्त्रैः, व्यापारैर्वणिजां व्रजाः।
करैर्विश्वंभराधीशाः, कपटैः कमलेक्षणाः ॥ ४९३ ॥

शक्ति का उपयोग करना चाहीए।

द्वौ हस्तौ द्वौ च पादौ च, दृश्यते मनुजाकृतिः।
अहो! कपीन्द्र! राजेन्द्र! गृहं किन्न करिष्यति ॥४९४॥
सूचिमुखे दुराचारे रण्डे पण्डितमानिनि।
असमर्थो गृहकरणे, समर्थो गृहभञ्जने ॥ ४९५ ॥

मन चलायमान कैसे हो।

पुष्पं दृष्ट्वा फलं दृष्ट्वा, दृष्ट्वा नारीं सुशोभिताम्।
एतानि त्रीणि वने दृष्ट्वा, कस्य न चलते मनः ॥४९६॥

कामदेव क्या चीज है।

सतीव्रतेऽग्नौ तृणयामि जीवितम्।
स्मरस्तु किं वस्तु तदस्तु भस्म यः ॥ ४९७ ॥

सात प्रकारका चौर ।

चौरश्चौरापकौ मन्त्री, भेदज्ञः काणकक्रयी ।
अन्नदः स्थानदश्चैव, चौराः सप्तविधाः स्मृताः॥४९८।

आलसीको ज्ञान नहीं होता ।

अलसस्य कुतो विद्या, अविद्यस्य कुतो धनम् ? ।
अधनस्य कुतो मित्र-ममित्रस्य कुतो बलम् ॥ ४९९ ॥

यह सातमें दया नहीं होती है ।

द्यूतकारस्तलारश्च स्तैलिको मांसविक्रयी ।
वार्धकी नृपतिर्वैद्यः, कृपया सप्त वर्जिताः ॥ ५०० ॥

मूर्ख की पास में वाणीविलास नकामा है ।

मूर्खाणामग्रतो वाचां, विलासो वाग्मिनां मुधा ।
लास्यं वेषभुजा बन्ध्य, पुरतोऽन्धसमाजदाम् ॥ ५०१ ॥

कीडी ( चींटी ) आदि पेट में न जाना चाहिए ।

मेधां पिपीलिका हन्ति, यूका कुर्याज्जलोदरम् ।
कुरुते मक्षिका वान्ति, कुष्ठरोगं च कोलिकः ॥ ५०२ ॥

कांटु की विटम्बना ।

कण्टको दारुखण्डश्च, वितनोति गलव्यथाम् ।
व्यञ्जनान्तर्निपतित-स्तालु विध्यति वृश्चिकः ॥ ५०३ ॥

रात्रिभोजनसे हानि ।

विलग्नश्च गले वालः, स्वरभङ्गाय जायते ।
इत्यादयो दृष्टदोषाः, सर्वेषां निशि भोजने ॥ ५०४ ॥
उलूक-काक-मार्जार-गृध्र-शम्बर-शूकराः ।
अहि-वृश्चिक-गोधाश्च, जायन्ते रात्रिभोजनात् ॥५०५॥
नैवाहुतिर्न च स्नानं, न श्राद्धं देवतार्चनम् ।
दानं वा विहितं रात्रौ भोजनं च विशेषतः ॥ ५०६ ॥

स्त्रीके स्वाभाविक दोष।

अनृतं साहसं माया, मूर्खत्वमतिलोभता ।
अशौचं निर्दयत्वं च, स्त्रीणां दोषाः स्वभावजाः ॥५०७॥

विश्वास नहिं करने लायक कोण है? ।

विद्युल्लताचञ्चलताश्रयाणां, स्त्रीणां नृपाणामथ दुर्जनानाम् ।
स्वार्थप्रियाणां परवञ्चकानां, कुर्वीत विश्वासमहो न धीमान् ॥

देवता को कैसे वस करना ? ।

कूटेन कूटं विजयेत धीमान्, सत्ये च सत्यं रचयेत् प्रपञ्चम् ।
विगन्धधूपेन जयेत् पिशाचान्, सुगन्धधूपेन जयेद्धि देवान् ॥

याचक की पहेचाण ।

गतेर्भङ्गः स्वरो हीनो, गात्रे स्वेदो महद्भयम् ।
मरणे यानि चिह्नानि, तानि चिह्नानि याचके ॥ ५१० ॥

लक्ष्मी का निवास कहां होता है ?।

गुरवो यत्र पूज्यन्ते, यत्र वित्त नयार्जितम् ।
अदन्तकलहो यत्र, शक्र ! तत्र वसाम्यहम् ॥ ५११ ॥

श्रेष्ठ क्या है ?।

वरं मौनं कार्यं, न च वचनमुक्तं यदनृतं,
वरं प्राणत्यागो, न च पिशुनवाक्येष्वभिरुचिः ।
वरं भिक्षाशित्वं, न च परधनास्वादनसुखं,
वरं वासोऽरण्ये, न पुनरविवेकाधिपपुरे ॥ ५१२ ॥

धन का माहात्म्य ।

वरं वनं व्याघ्रगजेन्द्रसेवितं,
द्रुमालयं पक्वफलाम्बुभोजनम् ।
तृणानि (नमन) शय्या परिधानवल्कलं,
न बन्धुमध्ये धनहीनजीवनम् ॥ ५१३ ॥

कन्दमूलनिषेध ।

पुत्रमांसं वरं भुक्तं, न तु मूलकभक्षणम् ।
भक्षणान्नरकं गच्छेत्, वर्जनात् स्वर्गमाप्नुयात् ॥५१४॥

कुवे वगेरे में स्नान करना अच्छा नहीं है ।

कूपेषु दधम स्नानं, वापीस्नानं च मध्यमम् ।
तटाके वर्जयेत् स्नानं, नद्याःस्नानं न शोभनम् ॥५१५॥

स्वार्थवश सब कुछ होता है।

वृक्षं क्षीणफलं त्यजन्ति विहगाः, शुष्कं सरः सारसाः,
निर्द्रव्यं पुरुषं त्यजन्ति गणिका, भ्रष्टं नृपं सेवकाः।
निर्गन्धं कुसुमं त्यजन्ति मधुपा, दग्धं वनान्तं मृगाः,
सर्वे स्वार्थवशाज्जनोऽभिरमते, नो कस्यचिद् (को) वल्लभः॥५१६॥

मनुष्यादि को पीडाभूत क्या है ?।

अध्वा जरा मनुष्याणां, हस्तिनां बन्धनं जरा,
अभोगेन जरा स्त्रीणां, संभोगो वाजिनां जरा ॥ ५१७ ॥

आगे बढा हुआ क्या करता है ?।

प्रवर्धमानः पुरुषस्त्रयाणामुपघातकः।
पूर्वोपार्जितमित्राणां, दाराणामथ वेश्मनाम् ॥ ५१८ ॥

राजा को इतने मित्र नहीं होना चाहीए।

वैद्यो गुरुश्च मन्त्री च, यस्य राज्ञः प्रियंवदाः।
शरीरधर्मकोशेभ्यः, क्षिप्रं स परिहीयते ॥ ५१९ ॥

सज्जन और दुर्जन का भेद।

अपराधशतं साधुः, सहेतैकोपकारतः।
शतं चोपकृतीर्नीचो, नाशयेदेकदुष्कृतात् ॥ ५२० ॥
दृष्टानपि सतो दोषान् मन्यन्ते नहि रागिणः ॥ ५२१ ॥

सब धर्मवालोंको क्या प्रिय है ? ।

पञ्चैतानि पवित्राणि, सर्वेषां धर्मचारिणाम् ।
अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम् ॥ ५२२ ॥

भूषण सच्चा क्या है ? ।

तृतीय लोचनं ज्ञानं, द्वितीयो हि दिवाकरः ।
अचौर्यहरणं वित्तं, विना स्वर्णं हि भूषणम् ॥ ५२३ ॥

चतुरता कीससे आती है ?

देशाटन पण्डितमित्रता च, वाराङ्गना राजसभाप्रवेशः ।
अनेकशास्त्रार्थविलोकन च, चातुर्यमूलानि भवन्ति पञ्च ५२४।

स्वभाव का औषध नहीं होता है।

काकः पद्मवने रतिं न कुरुते, हसो न कूपोदके,
मूर्खः पण्डितसङ्गमे न रमते, दासो न सिंहासने ।
कुस्त्री सज्जनसङ्गमे न रमते, नीच जनं सेवते,
या यस्य प्रकृति· स्वभावजनिता, केनापि न त्यज्यते ॥५२५॥

बुद्धि भाग्याधीन है ।

न निर्मित न (नापि) च केन दृष्ट, न श्रूयते हेममयः कुरङ्गः ।
तथापि तृष्णा रघुनन्दनस्य, विनाशकाले विपरीतबुद्धिः

कलसे कार्य होता है बलसे नहीं ।

यस्य बुद्धिर्बलं तस्य, निर्बुद्धेस्तु कुतो बलम् ।
वने सिंहो मदोन्मत्तः, शशकेन निपातितः ॥ ५२८ ॥

भावी की पहेचाण।

शिरसः स्फुरणे राज्यं, बाहोश्च प्रियमेलकः।
चक्षुषः स्फुरणे प्रीति-रधरस्य प्रियागमः ॥ ५२९ ॥

सत्तर प्रकार का संयम।

पञ्चाश्रवाद्विरमणं, पञ्चेन्द्रियनिग्रहः कषायजयः।
दण्डत्रयविरतिश्चेति, संयमः सप्तदशभेदः ॥ ५३० ॥

लक्ष्मी का त्याग करनेवाला कैसा होता है ?।

उत्पादिता स्वयमियं यदि तत्तनूजा,
तातेन वा यदि तदा भगिनी खलु श्रीः।
यद्यन्यसंगमवती च तदा परस्त्री,
तत्त्यागबद्धमनसः सुधियो भवन्ति ॥ ५३१ ॥

राग और द्वेष से युक्त को कोण बुद्धिमान नमेगा ?

शक्रं वज्रधरं (बलं) हरं हलधरं विष्णुं च चक्रायुधं,
स्कन्दं शक्तिधरं श्मशाननिलयं रुद्रं त्रिशूलायुधम्।
एतान्दोषभयार्दितान् गतघृणान् बालान् विचित्रायुधान्,
नानाप्राणिषु चोद्यतप्रहरणान् कस्तान्नमस्येद् बुधः ॥५३२॥
पश्चाद्दत्तं परैर्दत्तं, लभ्यते वा न लभ्यते।
स्वहस्तेन च यद् दत्तं, लभ्यते तन्न संशयः ॥ ५३३ ॥

रत्न उपद्रवरहित नहीं होते है।

चन्द्रे लाञ्छनता हिमं हिमगिरौ क्षारं जलं सागरे,
रुद्धाश्चन्दनपादपा विषधरैरम्भोरुहं कण्टकैः।

स्त्रीरत्नेषु जरा कुचेषु पतनं विद्वत्सु दारिद्रता,
सर्वं रत्नमुपद्रवेण सहितं दुर्वेधसा निर्मितम् ॥ ५३४ ॥

कर्णान्तायतलोचना शशिमुखी मत्तेभकुम्भस्तनी,
बिम्बोष्ठी मृगराजपेशलकटी गाङ्गेयगौरद्युतिः ।
श्रोणीभारघना मरालगमना कुन्दावदातद्विजा,
तन्वी पेशलपाणिपादयुगला कन्या न केषां मता ॥५३५॥

लोकः पृच्छति मे वार्तां, शरीरे कुशलं तव ।
कुतः कुशलमस्माकं, गलत्यायुर्दिने दिने ॥ ५३६ ॥

पुण्यं कीर्त्तिर्यशो लक्ष्मीः, स्वर्थाः साम्राज्यमद्भुतम् ।
प्रयाति मानतो हन्त, भवेद् दुर्गतिसंगतिः ॥ ५३७ ॥

श्रीशत्रुंजयशक्रवारणभवो मुक्तामणिः सच्छ्रियः,
श्रेणिः पुण्यनभोमणिः शुभयशोवेणिस्त्रिलोकीगुरु' ॥
श्रीमन्नाभिनरेन्द्रवंशजमणिः श्रीमान् युगादि' प्रभु-
र्देयात्सौख्यमखण्डितं कुवलयोद्बोधैकदोपामणिः ॥५३८॥

भव तरने में दान हि साधन है ।

दानं सिद्धिनिदानं हि, देयमत्र महाधिया ।
न तरन्ति विना दानं, प्राणिनो भवसागरम् ॥ ५३९ ॥

धर्मलाभ प्रशंसा ।

वश्यौषधं सर्वलक्ष्म्या, विपत्पन्नगगारुडम् ।
धर्मलाभं ददौ तस्मै, गुरुः संसारतारकम् ॥ ५४० ॥

गीत का महत्त्व ।

त्रैलोक्यवशकृद्गीतं, गीतं स्वर्गादिसौख्यकृत् ।
गीतं सर्वजनानन्दि, गीतं सर्वार्थसाधकम् ॥ ५४१ ॥

हिंसा निषेध ।

न कार्या सर्वथा हिंसा, नरकस्येव दूतिका ।
परपीडाकृतः पुंसः, प्रत्यासन्नो न धर्मराट् ॥ ५४२ ॥

गत समय फीर नहिं आता है ।

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता,
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः, पीतो न चन्द्रोदये,
तारुण्यं गतमेव निःफलमहो, शून्यालये दीपवत् ॥५४३॥

मूर्ख लडके से लडका नहिं होना ही अच्छा है ।

वरं गर्भस्रावो वरमपि च नैवाभिगमनं,
वरं जातप्रेतो वरमपि च कन्यैव जनिता ।
वरं वन्ध्या भार्या वरमपि च गर्भेषु वसति-
र्न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः ॥ ५४४ ॥

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं,
ते ग्रस्ताः पुनरभ्रतोयकणिका तीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥५४५॥

बिभेमि चिन्तामपि कर्तुमीदृशीं, चिराय चित्तार्पितनैषधेश्वरा।
मृणालतन्तुच्छिदुरा सतीस्थितिर्लवादपि त्रुट्यति चापलादपि॥

उचित और अनुचित को कोण जानता है ? ।

किमु कुवलयनेत्राः सन्ति नो नाकनार्यः,
त्रिदशपतिरहल्यां तापसीं यत् सिषेवे ।
हृदयतृणकुटीरे दीप्यमाने स्मराग्ना-
वुचितमनुचितं वा वेत्ति कः पण्डितोऽपि ? ॥ ५४७ ॥
प्राकृत एव प्राप्ते द्रव्ये देदीप्यते न सत्पुरुषः ।
वारिणि तैलं विकसति, निर्मुक्तः स्त्यायते सर्पिः ॥५४८॥
धूमः पयोधरपदं कथमप्यवाप्य,
वर्षाम्बुभिः शमयति ज्वलनस्य तेजः।
दैवादवाप्य कलुषप्रकृतिर्महत्त्व,
प्रायः स्वबन्धुजनमेव तिरस्करोति ॥ ४९ ॥

पुरुष–स्त्री संवाद ।

पाकं किं न करोषि पापिनि ! कथ ?, पापी त्वदीयः पिता,
रण्डे ! जल्पसि किं ? त्वदीयजननी, रण्डा त्वदीया स्वसा।
निर्गच्छ स्वगृहाद् बहिर्मम गृहं, नेदं त्वदीयं गृहं,
हा ! हा ! नाथ ! ममापि देहि मरणं, शप्पं मदीयं गतम् ।५५०।

जगन्नाथ कवि का कथन ।

न याचे गजालिं न वा वाजिराजिम्,
न वित्तेषु चित्तं मदीयं कदापि ।

इयं सुस्तनी मस्तकन्यस्तहस्ता,
लवङ्गी-कुरङ्गी-दृगङ्गी-करोतु ॥ ५५१ ॥

गुण-दुर्गुण होता है, दुर्गुण गुण बनता है ।

असंतुष्टा द्विजा नष्टाः, संतुष्टाश्च महीभुजः ।
सलज्जा गणिका नष्टा, निर्लज्जाश्च कुलाङ्गनाः ॥ ५५२ ॥

पुरुषार्थहीन से भाग्य भी चिडता है ।

त्रिषु श्यामां त्रिषु श्वेतां, त्रिषु ताम्रां त्रिषून्नताम् ।
त्रिगंभीरां त्रिविस्तीर्णां, त्र्यायतां त्रिकृशीयसीम् ॥५५३॥

स्वर्गीय सुख ।

वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्मा,
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली ।
अग्रे शैलौ सुकृतिसुगमौ चन्दनाच्छन्नदेशौ,
तत्रस्यानां सुलभममृतं सन्निधानात् सुधांशोः ॥५५४॥
उत्सङ्गे सिन्धुभर्तुर्भवति मधुरिपुर्गाढमाश्लिष्य लक्ष्मी-
मध्यास्ते वित्तनाथो निधिनिवहमुपादाय कैलासशैलम् ।
शक्रः कल्पद्रुमादीन् कनकशिखरिणोऽधित्यकासु न्यधासीत्,
धूर्तेभ्यस्त्रासमित्थं दधति दिविषदो मानवाः के वराकाः ॥

इक्ष्वाकुवंश का व्रत ।

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे,
नृपतिककुदं दत्त्वा यूने सिताऽऽतपवारणम् ।

मुनिवनतरुच्छाया देव्या तया सह शिश्रिये,
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ५५६ ॥

कवि-प्रशंसा ।

ते केचिदस्खलितबन्धनवप्रबन्ध-
सन्धानबन्धुरगिरः कवयो जयन्ति ।
येषामचर्वितरसापि चमत्करोति,
कर्णे कृतैव भणितिर्मधुरा सुधेव ॥ ५५७ ॥

एकः श्लोकवरो रसौघमधुरो हृद्यो वरं सत्कवे-
र्नैवेष्टः कुकवेः प्रलापबहुलः कृत्स्न प्रबन्धोऽपि वा ।
वक्रोक्त्या वलितः महासरभसः पौराङ्गनाविभ्रमो,
हर्षोत्कर्षकरो यथा नहि तथा ग्रामीणवध्वारतम् ॥५५८॥

किं कवेस्तस्य काव्येन, किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्न, न घूर्णयति यच्छिरः ॥ ५५९ ॥

वचन कैसा बोलना चाहिये ? ।

पिपासुता शान्तिमुपैति वारिजा,
न जातु दुग्धान्मधुनोऽधिकादपि ।
गुरोर्गिरः पल्लवनाऽर्थलाघवे,
मितं च सारं च वचो हि वाग्मिता ॥ ५६० ॥

यदि स्वभावान्मनोज्ज्वलं कुलं ततस्तदुद्भावनमौचिती कुतः? ।
अथाऽवदात तदहो विडम्बना तथा कथा प्रेष्यतयोपमेदुपः ॥
महाजनाचारपरम्परेदशी स्वनाम नामाददते न साधवः ।
अतोऽभिधातुं न तदुत्सहे पुनर्जनः किलाचारमुच विगायति ।

विधि की बलिहारी ।

पुरा गर्भादिन्द्रो मुकुलितकरः किङ्कर इव,
स्वयं स्रष्टा सृष्टेः पतिरथ निधीनां निजसुतः ।
क्षुधित्वा षण्मासान् स किल पुरुरन्याट जगतीं,
अहो ! केनाप्यस्मिन् विलसितमलङ्घ्यं हतविधेः ॥५६३॥

भङ्गोऽभूत् भरतेश्वरस्य सगरस्यापत्यशोको वने,
विश्रान्तिः गृहिणी गृहाद्रघुपतेः पण्डोस्तु जामापदः ।
स्थानाद् विच्युतिरच्युतस्य महतामीदृग्विधा दुःस्थितिः,
को वाऽन्यः कुशली कृतीह बलवान् नान्यो बलीयान् विधेः॥

अच्छी भावना ।

सत्त्वेषु मैत्रीं गुणिषु प्रमोदं, क्लिष्टेषु जीवेषु कृपापरत्वम् ।
माध्यस्थ्यभावं विपरीतवृत्तौ, सदा ममात्मा विदधातु देव ! ॥

ज्ञानावरणीयकर्म कैसे उत्पन्न होते है ? ।

ज्ञानस्य ज्ञानिनो वाऽपि, निन्दाप्रद्वेषमत्सरैः ।
उपघातैश्च विघ्नैश्च, ज्ञानघ्नं कर्म बध्यते ॥ ५६६ ॥

बुद्धिगम्य क्या है ? ।

तन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नो पद्मजन्माऽष्टभिः,
स्कन्दो द्वादशभिर्न वा न मघवा चक्षुःसहस्रेण च ।
संभूयापि जगत्त्रयस्य नयनैस्तद्वस्तु नो वीक्ष्यते,
प्रत्याहृत्य दृशः समाहितधियः पश्यन्ति य पण्डिताः

लुचा की पहेचाण ।

प्राक् पादयोः पतति खादति पृष्ठमांसं,
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्क,
सर्वं खलस्य चरितं मशकः करोति ॥ ५६८ ॥

पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः ।
शनैः शनैः पदं धत्ते जीवानां वधशङ्कया ॥ ५६९ ॥

सहवासी हि विजानाति सहवासिविचेष्टितम् ।
बकः किं वर्ण्यते राम ! येनासो निष्कुलीकृतः ॥५७०॥

पश्यन्नपि न मन्येत यस्तस्मै स्वस्ति धीमते ॥५७१॥

विषय कैसा है ? ।

आपातमात्रमधुरा, परिणामेऽतिदारुणाः ।
शठवाच इवात्यन्तं, विषया विश्ववञ्चकाः ॥ ५७२ ॥

आयुष्यादि विनश्वर है ।

आयुर्धनं यौवन च, स्पर्द्धयेव परस्परम् ।
सत्वर गत्वराण्येव, संसारेऽस्मिन् शरीरिणाम् ॥५७३॥

समय समय का काम करता है ।

उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद् बलवानपि ।
तपसि मन्दगभस्तिरभीषुमान्नहि महाहिमहानिकरोऽभवत् ॥
को निर्दग्धस्त्रिपुरजयिना ? कश्च कर्णस्य हन्ता ?
नद्या; कूल विघटयति कः कः परस्त्रीरतश्च ? ॥ ५७४ ॥

कः सन्नद्धो भवति समरे ?, कः प्रियश्चाङ्गनानां ?
को दुःसङ्गाद् भवति विदुषां ?, मानपूजापहारः ॥५७५॥

पुष्पेषु माता पुरुषायमाणा लज्जावती विश्वसृजं विलोक्य ।
नाभीसरोजे नयनं मुरारेर्वामेतरं वारयति स्म वेगात् ॥५७६॥

जाता लता हि शैले, जातु लतायां न जायते शैलः ।
संप्रति तद्विपरीतं, कनकलतायां गिरिद्वयं जातम् ॥ ५७७ ॥

सहायक से शोभा बढती है ।

वस्त्रहीनमलङ्कारं, घृतहीनं च भोजनम् ।
स्वरहीनं च गान्धर्वं, भावहीनं च मैथुनम् ॥ ५७८ ॥

प्रभु की बोध देने की कुशलता ।

सद्धर्मबीजवपनानघकौशलस्य,
यल्लोकबान्धव ! तवापि खिलान्यभूवन् ।
तन्नाद्भुतं खगकुलेषु हि तामसेषु,
सूर्यांशवो मधुकरीचरणावदाताः ॥ ५७९ ॥

तावच्चंद्रबलं ततो गृहबलं ताराबलं भूबलं,
तावत्सिद्ध्यति वांछितार्थमखिलं तावज्जनः सज्जनः ।
मुद्रामंडलमंत्रतंत्रमहिमा तावत्कृतं पौरुषं,
यावत्पुण्यमिदं सदा विजयते पुण्यक्षये क्षीयते ॥ ५८० ॥

धर्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः,
सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः,

राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां,
तत् किं यन्नकरोति किंच कुरुते स्वर्गापवर्गाद्यपि ॥५८१॥
पत्नी प्रेमवती सुतः सुविनयो भ्राता गुणालकृतः,
स्निग्धो बधुजनः सखापि चतुरो नित्य प्रसन्नः प्रभुः ।
निर्लोभानुचरा स्वबधुसुमनः प्रायोऽत्र भोग्य धनं,
पुण्यानामुदयेन संततमिद कस्यापि संपद्यते ॥ ५८२ ॥
वापी वप्रविहारवर्णवनिता वाग्मी वन वाटिका,
विद्वद्(वैद्य)ब्राह्मणवादित्रारिविबुधा वेश्या वणिग् वाहिनी।
विद्या वीरविवेकवित्तविनयो वाचयमो वल्लिका,
वस्त्र वारणवाजिवेसरवर राज्य च वै शोभते ॥ ५८३ ॥
राज्य निःसचिवं गतप्रहरण सैन्यं विनेत्र मुख,
वर्षा निर्जलदा धनी च कृपणो भोज्यं तथाज्य विना ।
दुःशीला दयिता सुहृन्निकृतिमान् राजा प्रतापोज्झितः
शिष्यो भक्तिविवर्जितो नहि विना धर्मं नरः शस्यते ॥५८४॥
कुग्रामवास कुनरेन्द्रसेवा कुभोजन क्रोधमुखी च भार्या ।
कन्यानहुत्वं च दरिद्रता च षड् जीवलोके नरका भवति ।५८५।
राजा कुलवधूर्विप्रा नियोगिमन्त्रिणस्तथा ।
स्थानभ्रष्टा न शोभन्ते दता केशा नखा नराः ॥ ५८६ ॥
पूगीफलानि पत्राणि राजहसतुरंगमाः ।
स्थानभ्रष्टा सुशोभते सिंहाः सत्पुरुषा गजा ॥ ५८७ ॥
निर्दतः करटी हयो गतजवश्चद्र विना शर्वरी,
निर्गन्ध कुसुमं सरोगतजल छायाविहीनस्तरुः ।

भोज्यं निर्लवणं सुतो गतगुणश्चारित्रहीनो यति-
निर्द्रव्यं भुवनं न राजति तथा धर्मं विना मानवः ॥५८८॥
अमेध्यपूर्णे कृमिजालसंकुले स्वभावदुर्गंधअशौचनिन्हवे
कलेवरे मूत्रपुरीषभाजने लपंति मूढा विरमन्ति पंडिताः ।५८९।
स्पृष्ट्वा शत्रुंजयं तीर्थं, नत्वा रैवतकाचलं ।
स्नात्वा गजपदे कुण्डे, पुनर्जन्म न विद्यते ॥ ५९० ॥
भक्तिं तीर्थकरे गुरौ जिनमते संघे च हिंसाऽनृत-
स्तेयाब्रह्मपरिग्रहव्युपरमं क्रोधाद्यरीणां जयं ।
सौजन्यं गुणिसंगमिंद्रियदमं दानं तपो भावनां,
वैराग्यं च कुरुष्व निर्वृतिपदे यद्यस्ति गंतुं मनः ॥ ५९१ ॥

श्री तीर्थपान्थरजसा विरजीभवन्ति,
तीर्थेषु वंभ्रमणतो न भवे भ्रमन्ति ।
तीर्थव्ययादिह नराः स्थिरसंपदः स्युः,
पूज्या भवंति जगदीशमथार्चयंतः ॥ ५९२ ॥
छट्ठेणं भत्तेणं अपाणएणं तु सत्तजत्ताय
जो कुणइ सित्तुंजये सो तइए भवे लहइ सिद्धिं ॥५९३॥

यः संसारनिरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते,
यं तीर्थं कथयंति पावनतया येनाऽस्ति नान्यः समः ।
यस्मै तीर्थपतिर्नमस्यति सतां यस्माच्छुभं जायते,
स्फूर्तिर्यस्य परा वसंति च गुणा यस्मिन् स संघोऽर्च्यताम् ५९४
लक्ष्मीस्तं स्वयमभ्युपैति रभसा कीर्तिस्तमालिंगति,
प्रीतिस्तं भजते मतिः प्रयतते तं लब्धुमुत्कण्ठया ।

स्वःश्रीस्त परिरब्धुमिच्छति मुहुर्मुक्तिस्तमालोकते,
यः संघं गुणराशिकेलिसदन श्रेयोरुचिः सेवते ॥ ५९५ ॥

आतुरे व्यसने प्राप्ते, दुर्भिक्षे शत्रुनिग्रहे ।
राजद्वारे श्मशाने च, यस्तिष्ठति स बान्धवः ॥ ५९६ ॥

कीटिकासंचितं धान्यं, मक्षिकासंचित मधु ।
कृपणेन संचिता लक्ष्मी–रपरैः परिभुज्यते ॥ ५९७ ॥

पापें जे धन मेलियुं, ते धन किं थिर थाय ।
मेलणहारो मरी गयो, ते धन कोक ज खाय ॥ ५९८ ॥

पिबंति नद्यः स्वयमेव नाम्भः, खादन्ति न स्वादुफलानि वृक्षाः
पयोमुचः किं विलसति सस्य, परोपकाराय सता विभूतयः५९९

कैवर्तकर्कशकरग्रहणाच्च्युतोऽपि,
जाले पुनर्निपतितः शफरोऽविवेकी ।
जालात् पुनर्विगलितो गलितो बकेन,
वामे विधौ वत कुतो व्यसनान्निवृत्तिः ॥ ६०० ॥

एकेनाऽपि सुपुत्रेण सिंही स्वपिति निर्भयम् ।
सहैव दशभिः पुत्रैर्भार वहति गर्दभी ॥ ६०१ ॥

आदाय मासमखिलं स्तनवर्जमङ्गाद्,
मा मुञ्च वागुरिक ! यामि कुरु प्रसादम् ।
अद्यापि सस्यकवलग्रहणानभिज्ञा,
मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥ ६०२ ॥

जणणी जम्मभूमी पच्छिमानिद्दा सुभासिश्रा गुट्ठी
मणइट्ठं माणुस्सं पंच वि दुक्खेण मुच्चंति ॥ ६०३ ॥

रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा,
निरालंबो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः,
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥६०४।

विजेतव्या लङ्का चरणतरणीयो जलनिधिः,
विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्याजौ रामः सकलमवधीद् राक्षसकुलम्,
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥६०५॥

अद्यापि नोज्झति हरः किल कालकूटं,
कूर्मो बिभर्ति धरणीमपि पृष्ठकेन ।
अम्भोनिधिर्वहति दुर्वहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ६०६ ॥

रिक्तपाणिर्न पश्येच्च राजानं देवतां गुरुम्
उपाध्यायं च वैद्यं च फलेन फलमादिशेत् ॥६०७॥

आस्तन्यपानाज्जननी पशूनामादारलाभाच्च नराधमानाम् ।
आगेहकर्म्मैव तु मध्यमानामाजीवितात् तीर्थमिवोत्तमानाम्
॥ ६०८ ॥

जातापत्या पतिं द्वेष्टि, कृतदारस्तु मातरम् ।
कृतार्थः स्वामिनं द्वेष्टि, जितरोगश्चिकित्सकम् ॥ ६०९ ॥

एका भार्या त्रयः पुत्रा द्वे हले दश धेनवः ।
ग्रामे वासः पुरामन्ने स्वर्गादपि विशिष्यते ॥ ६१० ॥

तरुण सर्पपशाक नवौदन पिच्छिलानि च दधीनि ।
अल्पव्ययेन सुन्दरि! ग्राम्यजनो मिष्टमश्नाति ॥६११॥

अमन्त्रमक्षर नास्ति, नास्ति मूलमनौषधम् ।
अनाथा पृथिवी नास्ति, आम्नायाः खलु दुर्लभाः॥६१२॥

वेश्याका नृपतिश्चौरो नीरमार्जारदष्ट्रिणः ।
जातवेदा· कलादश्च न विश्वास्या इमे क्वचित् ॥६१३॥

द्यूतं सर्वापदां धाम, द्यूत दीव्यन्ति दुर्धियः ।
द्यूतेन कुलमालिन्यं, द्यूताय श्लाघतेऽधम· ॥ ६१४ ॥

खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् ।
दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥६१५॥

शास्त्र बोधाय दानाय धन धर्माय जीवितम् ।
वपुः परोपकाराय धारयन्ति मनीषिणः ॥ ६१६ ॥

अय निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ६१७ ॥

वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्त विषमस्थितं वा,रक्षन्ति पुण्यानि पुराकृतानि ६१८

सपदि यस्य न हर्षो, विपदि विषादो रणे च धीरत्वम् ।
तं भुवनत्रयतिलक, जनयति जननी सुतं विरलम् ॥६१९॥

गात्र सङ्कुचित गतिर्विगलिता दंताश्च नाशं गता ।
दृष्टिर्भ्रश्यति रूपमेव ह्रसते वैरूप्यवर्णोदयम् ॥

वाक्यं नैव करोति बांधवजनः पत्नी न शुश्रूषते ।
धिक्कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ ६२० ॥

दिव्यज्ञानयुता जगत्त्रयनुताः शौर्यान्विताः सत्कृताः ।
देवेंद्रासुरवृंदवंद्यचरणाः सद्विक्रमाश्चक्रिणः ॥
वैकुण्ठा वलशालिनो हलधरा ये रावणाद्याः परे ।
ते कीनाशमुखं विशंत्यशरणा यद्वा न लंघ्यो विधिः ॥६२१॥

ये पातालनिवासिनोऽसुरगणा ये स्वैरिणो व्यंतरा ।
ये ज्योतिष्कविमानवासिविबुधास्तारांतचंद्रादयः ॥
सौधर्मादिसुरालये सुरगणा ये चापि वैमानिका-
स्ते सर्वेऽपि कृतांतवासमवशा गच्छंति किं शुच्यते? ।६२२।

यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा ।
यावच्चेंद्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ॥
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-
नादीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः? ॥ ६२३ ॥

जिणसासणस्स सारो, चउद्दसपुव्वाण जो समुद्धारो ।
जस्स मणे नमुक्कारो, संसारो तस्स किं कुणइ? ॥ ६२४ ॥

नात्यन्तसरलैर्भाव्यं गत्वा पश्य वनस्पतिम् ।
सरलास्तत्र छिद्यंते कुब्जास्तिष्ठंति पादपाः ॥ ६२५ ॥

शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं ।
शीलं ह्यप्रतिपाति वित्तमनघं शीलं सुगत्यावहं ॥
शीलं दुर्गतिनाशनं सुविपुलं शीलं यशः पावनं ।
शीलं निर्वृतिहेत्वनंतसुखदं शीलं तु कल्पद्रुमः ॥६२६॥

भोगे रोगमयं सुखे क्षयमयं वित्तेऽग्निभूभृद्भयं ।
माने म्लानिमयं जये रिपुभयं वंशे कुयोषिद्भयम् ॥
दास्ये स्वामिभयं गुणे खलभयं काये कृतांताद्भयं ।
सर्वं नाम भयं भवेदिह नृणां वैराग्यमेवाभयम् ॥ ६२७ ॥
लज्जा दया दमो धैर्यं पुरुषालापवर्जनम् ।
एकाकित्वपरित्यागो नारीणां शीलरक्षणम् ॥ ६२८ ॥
यौवनं धनसंपत्तिः, प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय, किं पुनस्तच्चतुष्टयम् ॥ ६२९ ॥
आदौ मज्जनचारुचीरतिलकं नेत्रांजनं कुंडलं,
नासामौक्तिकहारपुष्पकलिकं झंकारवन्नूपुरम् ॥
अंगं चंदनचर्चितं कुचमणिक्षुद्रावली घण्टिका,
ताम्बूलं करकंकणं चतुरता शृंगारकाः षोडश ॥ ६३० ॥
दत्तस्तेन जगत्यकीर्तिपटहो गोत्रे मषीकूर्चकः-
श्चारित्रस्य जलांजलिर्गुणगणारामस्य दावानलः ॥
संकेतः सकलापदां शिवपुरद्वारे कपाटो दृढः ।
शीलं येन निजं विलुप्तमखिलं त्रैलोक्यचूडामणिः ॥६३१॥
भक्खणे देवदव्वस्स परत्थीगमणेण य
सत्तमं नरयं यांति सत्त वारा उ गोयमा ! ॥ ६३२ ॥
विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं ।
विद्या भोगकरी यशः [illegible] विद्या गुरूणां गुरुः
विद्या बंधुजनो [illegible] परं दैवतं ।
विद्या राजसु [illegible]

यस्य नास्ति स्वयं प्रज्ञा, शास्त्रं तस्य करोति किं ? ।
लोचनाभ्यां विहीनस्य, दर्पणः किं करिष्यति ?॥ ६३४ ॥

कोहो पीइं पणासेइ, माणो विणयनासणो ।
माया मित्ति पणासेइ, लोहो सव्वविणासणो ॥ ६३५ ॥

वैरवैश्वानरव्याधि–वादव्यसनलक्षणाः ।
महानर्थाय जायन्ते वकाराः पंच वर्द्धिताः ॥ ६३६ ॥

पासा वेश्या अग्नि जल ठग ठाकुर सोनार ।
ए दश न होये आपणा दुर्जन सर्प मंजार ॥ ६३७ ॥

दिवा पश्यति नो घूकः, काको नक्तं न पश्यति ।
अपूर्वः कोऽपि कामांधो, दिवा नक्तं न पश्यति ॥ ६३८ ॥

न पश्यति हि जात्यंधः, कामांधो नैव पश्यति ।
न पश्यति मदोन्मत्तो, अर्थी दोषं न पश्यति ॥ ६३९ ॥

न स्वर्धुनी न फणिनो न कपालदाम ।
नेन्दोः कला न गिरिजा न जटा न भस्म ॥
यत्रान्यदेव च न किञ्चिदुपास्महे तद्,
रूपं पुराणमुनिशीलितमीश्वरस्य ॥ ॥ ६४० ॥

स्वपतिं या परित्यज्य निस्त्रपोपपतिं भजेत् ।
तस्यां क्षणिकचित्तायां विश्रम्भः कोऽन्ययोषिति ॥६४१॥

प्राणसन्देहजननं परमं वैरकारणम् ।
लोकद्वयविरुद्धं च परस्त्रीगमनं त्यजेत् ॥ ६४२ ॥

जले तैलं खले गुह्यं पात्रे दानं मनागपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ ६४३ ॥

जम्मतीए सोगो, वड्ढतीए य वड्ढए चिंता ।
परिणीयाए दंडो, जुवइपिया दुक्खिओ निचम् ॥६४४॥

छट्ठं छट्ठेण तवं कुणमाणो पढमगणहरो भयव ।
अक्खीणमहाणसीओ सिरिगोयमसामिओ जाओ ॥६४५॥

कूटसाक्षी मृपाभापी कृतघ्नो दीर्घरोषणः ।
मद्यपापर्द्धिकृन्नीरैर्न शुद्ध्यति कदाचन ॥ ६४६ ॥

चित्तमन्तर्गत दुष्टं तीर्थस्नानैर्न शुद्ध्यति ।
शतशोऽपि जलैर्धौत सुराभाण्डमिवाऽशुचि ॥ ६४७ ॥

आयुर्वर्पशत नृणा परिमितं रात्रौ तदर्धं गतम्,
तस्यार्द्धस्य कदाचिदर्धमधिकं वृद्धत्वबाल्यत्वगम् ।
शेष व्याधिवियोगशोकमदनासेवादिभिर्नीयते
देहे वारितरङ्गचंचलतरे धर्म कुतः प्राणिनाम् ॥ ६४८॥

दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवेद्गर्भवासे नराणा,
वालत्वे चापि दुःख मललुलितवपुः स्त्रीपयःपानमिश्रम् ॥
तारुण्ये चापि दुःखं भवति विरहज वृद्धभावोऽप्यसारः,
ससारे रे मनुष्या वदत यदि सुख स्वल्पमप्यस्ति किंचित् ६४९

दारिद्र्याकुलचेतसा सुतसुताभार्यादिचिंताजुपा,
नित्यं दुर्भरदेहपोपणकृते रात्रिंदिव खिद्यताम् ।
राजाज्ञा प्रतिपालनोद्यतधिया विश्राममुक्तात्मनां,
सर्वोपद्रवशंकिनामघभृतां धिग् देहिना जीवितम् ! ! ॥६५०॥

निर्द्रव्यो धनचिंतया धनपतिस्तद्रक्षणे चाकुलो ।
निःस्त्रीकस्तदुपायसंगतमतिः श्रीमानपत्येच्छया ॥
प्राप्तस्तान्यखिलान्यपीह सततं रोगैः पराभूयते ।
जीवः कोऽपि कथंचनापि नियतं प्रायः सदा दुःखितः ।६५१।

कस्तूरीकृष्णकायच्छविरतनुफणारत्नरोचिष्णुमाली ।
विद्युज्ज्वाली गभीरानघवचनमहागर्जिविस्फूर्जितश्रीः ॥
वर्षन् तत्त्वांबुपूरैर्भविजनहृदयोर्व्यां लसद्बोधिबीजा-
ङ्कुरं श्रीपार्श्वमेघः प्रकटयतु शिवानर्घ्यसस्याय शश्वत् ।६५२।

शत्रूणां तपनः सदैव सुहृदामानन्दनश्चन्द्रवत् ।
पात्रापात्रनिरीक्षणे सुरगुरुर्दीनेषु कर्णोपमः ॥
नीतौ रामनिभो युधिष्ठिरसमः सत्ये श्रिया श्रीपतिः ।
स्वीयान्येष्वपि पक्षपातसुभगः स्वामी यथार्थो भवेत् ॥६५३॥

वरं रेणुर्वरं भस्म नष्टश्रीर्न पुनर्नरः ।
मुक्त्वैनं दृश्यते पूजा क्वापि पर्वणि पूर्वयोः ॥ ६५४ ॥

यां चिन्तयामि सततं मयि सा विरक्ता ।
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ॥
अस्मत्कृते च परितुष्यति काचिदन्या ।
धिक् तां च तं च मदनं च इमां च मां च ॥ ६५५ ॥

दयैव धर्मेषु गुणेषु दानं प्रायेण चान्नं प्रथितं प्रियेषु ।
मेघः पृथिव्यामुपकारकेषु तीर्थेषु माता तु मता नितान्तम्
॥ ६५६ ॥

दुष्टस्य दण्डः स्वजनस्य पूजा, न्यायेन कोशस्य सदैव वृद्धिः ।
अपक्षपातो रिपुराष्ट्ररक्षा, पञ्चैव धर्माः कथिता नृपाणाम् ॥
॥ ६५७ ॥

सीह सउण न चंदबल नवि जोइ धण रिद्धि ।
एकल्लो लक्खहिं भिडइ जिहा साहस तिहा सिद्धि ॥६५८॥

उपाध्यायाद्दशाचार्य, आचार्याणां शतं पिता ।
सहस्र तु पितुर्माता गौरवेणातिरिच्यते ॥ ६५९ ॥

बद्धा येन दिनाधिपप्रभृतयो मञ्चस्य पादे ग्रहाः ।
सर्वे येन कृताः कृताञ्जलिपुटाः शक्रादिदिक्पालकाः ॥
लङ्का यस्य पुरी समुद्रपरिखा सोऽप्यायुषः संक्षये ।
कष्ट विष्टपकण्टको दशमुखो दैवाद् गतः पञ्चताम् ॥६६०॥

धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः ॥
अस्माकं तु मनोरथैः परिचितप्रासादवापीतट—
क्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयते ॥ ६६१ ॥

पानीयस्य रसः शान्तः परान्नस्यादरो रसः ।
आनुकूल्यं रसः स्त्रीणां मित्रस्यावचन रसः ॥ ६६२ ॥

एकं ध्याननिमीलितं मुकुलित चक्षुर्द्वितीय पुनः ।
पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम् ॥
अन्यत्क्रूरविकृष्टचापमदनक्रोधानलोद्दीपितम् ॥
शम्भोर्भिन्नरस समाधिसमये नेत्रत्रय पातु व ॥ ६६३ ॥

कर्तुः स्वयं कारयितुः परेण, तुष्टेन भावेन तथाऽनुमन्तुः ।
साहाय्यकर्तुश्च शुभाशुभेषु, तुल्यं फलं तत्त्वविदो वदन्ति ॥

हरिहरचउराणणचंद–सूर–खंदाइणो वि जे देवा ।
नारीण किंकरत्तं कुणंति धि द्धी विसयतण्हा ॥ ६६४ ॥

अणिमिसनयणा मणकज्जसाहणा पुप्फदामअमिलाणा ।
चउरंगुलेण भूमिं न छिवंति सुरा जिणा विंति ॥ ६६५ ॥

श्वेताम्बरधरा नारी श्वेतगन्धावलेपना ।
अवगूहेत यं स्वप्ने तस्य श्रीः सर्वतोमुखी ॥ ६६६ ॥

क्षमा खड्गं करे यस्य दुर्जनः किं करिष्यति ? ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ ६६७ ॥

ॐ नमो विश्वनाथाय विश्वस्थितिविधायिने ।
अर्हते व्यक्तरूपाय युगादीशाय योगिने ॥ ६६८ ॥

अर्हच्चक्री श्रियः स्वामी चामीकरसमप्रभः ।
स्तुत्यः सत्कृत्य लाभाय श्रीशांतिः शुभतांतिकृत् ॥६६९॥

हेलांदोलितदैत्यारिर्जरासंधप्रतापहृत् ।
स्मरणीयं स्मरं कुर्वन् श्रीमान्नेमिः पुनातु वः ॥६७०॥

यस्य दृष्टिसुधावृष्टिदानादाहिरहीश्वरः ।
जातस्तापत्रयान्मुक्तः स श्रीपार्श्वो मुदेऽस्तु वः ॥६७१॥

सुराद्रिं सुरनाथस्य संशयापनयाय यः ।
अकंपयत्रिधा वीरः श्रीवीरः श्रेयसेऽस्तु वः ॥ ६७२ ॥

धर्मार्थकाममोक्षेषु वैलक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥ ६७३ ॥

नरत्वं दुर्लभं लोके विद्या तत्र च दुर्लभा ।
कवित्वं दुर्लभ तत्र शक्तिस्तत्र च दुर्लभा ॥ ६७४ ॥

काव्यालापाश्च ये केचित् गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते विष्णोरशा महात्मनः ॥ ६७५ ॥

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः ।
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ॥
धिग् धिक् शक्रजित प्रबोधितवता किं कुम्भकर्णेन वा ।
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः? ॥६७६॥

य' कौमारहरः स एव हि वरस्ता एव चैव क्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवाऽस्मि तथाऽपि तत्र सुरतव्यापारलीलाविधौ ।
रेवारोधसि वेतसीतरुतले चेत समुत्कण्ठते ॥ ६७७ ॥

शून्य वासगृह विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिर निर्वर्ण्यपत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं ॥
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥६७८॥

यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं,
दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी ।
क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो,
ध्याने विश्वमसावधार्मिककुल कस्मैचिदस्मै नमः ॥६८१॥

वाली जोहउ नहु चलइ हीइडइ धरइ कसाय ।
मेन्ही उटारस सींदरो जहीं भावइ ताहि जाइ ॥६८०॥

कार्श्यं क्षुत्प्रभवं कदन्नमशनं शीतोष्णयोः पात्रता,
पारुष्यं च शिरोरुहेषु शयनं मह्यास्तले केवले।
एतान्येव गृहे वहन्त्यवनतिं तान्युन्नतिं संयमे,
दोषाश्चापि गुणा भवन्ति हि नृणां योग्ये पदे योजिताः ॥

दारिद्र को किसीने जलाया नहीं।

दग्धं खाण्डवमर्जुनेन बलिना, द्रव्यैर्द्रुमैः सेवितम्,
दग्धा वायुसुतेन रावणपुरी, लंका सकलस्वर्णभूः।
दग्धः पंचशरः पिनाकपतिना, तेनापि युक्तं कृतम्,
दारिद्यं जनतापकारकमिदं, केनापि दग्धं नहि ॥ ६९७॥

विधिकी प्रवलता।

पञ्चैते पाण्डुपुत्राः, क्षितिपतितनया धर्मभीमार्जुनाद्याः,
शूराः सत्यप्रतिज्ञा, दृढतरवपुषः, केशवेनापि गूढाः।
ते वीराः पाणिपात्रे कृपणजनगृहे, भिक्षुचर्यां चरन्तः,
को वा समर्थो भवति विधिवशाद् भाविनी कर्मरेखा।६९८।

पादाहतः प्रमदया विकसत्यशोकः,
शोकं जहाति बकुलो मुखसीधुसिक्तः।
आलिङ्गितः कुरुबकः कुरुते विकाश—
मालोकितः सतिलकः तिलको विभाति ॥ ६९९ ॥

न स्नेहेन न विद्यया न च धिया रूपेण शौर्येण वा,
नेर्ष्याचाटुभयार्थदानविनयक्रोधक्षमामार्दवैः ॥
लज्जायौवनभोगसत्यकरुणासत्त्वादिभिर्वा गुणै—
र्गृह्यन्ते न विभूतिभिश्च ललना दुःशोलचित्ता यतः॥७००॥

स्वाध्यायादि नहीं करनेवाला जगत् में पापी कहा जाता है ।

आवश्यक–ध्यान–तपोविधान–स्वाध्यायशून्यानि
दिनानि यस्य ।
प्रयाति तारुण्यहता स्वमातुर्जातेन पापेन किमत्र तेन ७०१

यः सर्वमूलोत्तरसद्गुणादि, प्रध्वसपापेन न निंदति स्वं ।
निलीननीलीप्रचयाशुकश्रीः, कथ स शुध्येदपि वर्षलक्षैः॥७०२॥

आत्मायुर्नरके धन नरपतौ, प्राणास्तुलाया कुल,
वाच्यत्वे हृदि दीनता त्रिभुवने, तेनायशः स्थापितम् ।
येनेदं बहुदुःखदायि सुहृदा, हास्यं खलाना कृतं,
शोच्यं साधुजनस्य निंदितपरस्त्रीसगसेवासुखम् ॥७०३॥

सत्य का महिमा ।

सत्येनाग्निर्भवेच्छीतो, गाध दत्तेऽम्बु सत्यतः ।
नासिश्छिनत्ति सत्येन, सत्याद्रज्जूयते फणी ॥ ७०४ ॥

दसण–वय–सामाइय–पोसह–पडिमा–सचित्त–आरभ ।
पेसं–उद्दिट्ठ वज्जरा समणभूए अ ॥ ॥ ७०५ ॥

विजयापत्रमादाय, श्वेतसर्पपसंयुतम् ।
अनेन लेपयेद्देह, मोहन सर्वतो जगत् ॥ ७०६ ॥

गृहीत्वा तुलसीपत्र, छायाशुष्क तु कारयेत् ।
अश्वगधसमायुक्त विजयाबीजसंयुतम् ॥ ॥ ७०७ ॥

कपिलादुग्धसार्द्धे, घटकार्कटप्रमाणतः ।
भक्षित्वा प्रातरुत्थाय, मोहनं सर्वतो जगत् ॥ ७०८ ॥

पचांगं दाडिमीपिष्टो, श्वेतगुञ्जासमन्वितः ।
एभिस्तु तिलकं कृत्वा, मोहनं सर्वतो जगत् ॥ ७०९ ॥
कटुतुम्बीरवीजतैलं, ज्वालयेत् पतवर्त्तिका ।
कज्जलेनांजयेन्नेत्रे, मोहनं भवति ध्रुवम् ॥ ७१० ॥
किं ब्रूमो जलधेः श्रियं स हि खलु, श्रीजन्मभूमिः स्वयं,
वाच्यः किं महिमाऽपि यस्य हि किल, द्वीपं महीति श्रुतिः ।
त्यागः कोऽपि स तस्य बिभ्राति जगद्यस्यार्थिनोऽप्यम्बुदाः ।
शक्तेः कैव कथाऽपि यस्य भवति चोभेण कल्पान्तरम् ७११

पार्वती और शंकर का प्रश्नोत्तर ।

कस्त्वं शूली मृगय भिषजं, नीलकण्ठः प्रियेऽहं,
केकामेकां कुरु पशुपतिर्लाङ्गुलं ते कथं न ? ।
स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवाया,
गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥ ७१२ ॥

निरर्थक दूसरों का हित नष्ट करनेवाले कैसा जानना ? ।

एके सत्पुरुषाः परार्थरचकाः स्वार्थं परित्यज्य ये,
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ॥
तेऽमी मानुषराक्षसाः परहितं, स्वार्थाय निघ्नन्ति ये,
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीम हे ॥७१३॥

जिनेश्वरभगवान का तत्त्व ।

जीवोऽनादिरनैधनः स गुणवान् कर्त्ता च भोक्ता विदन्,
सूक्ष्मो देहमितश्च याति नरकं तिर्यग्गतिं चाघतः ।

पुण्यात् स्वर्गमुपैति मानुषगतिं प्राप्नोति तन्मिश्रणात्,
मुक्तिं गच्छति पुण्यपापविलयादित्याह तत्त्व जिनः ॥७१४॥

भग्गो णट्ठो मुणिवरो गिरिकन्दरपइट्ठो ।
तत्थ वि सासणदेवीपसाएण सावज्जो दिट्ठो ॥ ७१५ ॥

कुलीन पुरुष किस को कहते हैं ? ।

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधि-
निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः ।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः,
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजात कथयति ॥७१६॥

रात्रिर्गमिष्यति भविष्यति सुप्रभातं,
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे,
हा हन्त हन्त नलिनीं गज उज्जहार ॥ ७१७ ॥

मय्येव जीर्णता यातु, यत् त्वयोपकृत हरेः ।
नरः प्रत्युपकारार्थी, विपत्तिमभिकाङ्क्षति ॥ ७१८ ॥

त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवर,
मेघैरन्तरित प्रिये तव मुखच्छायाऽनुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥७१९॥

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः,
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा ।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो,
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥ ७२० ॥

रत्याप्तप्रियलाञ्छने कठिनता वासे रसालिङ्गिते,
प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे ।
कोकस्पर्धिनि भोगभाजि जनतानङ्गे खलीनोन्मुखे,
भाति श्रीरमणावतारदशकं बाले भवत्याः स्तने ॥ ७२१ ॥

किसी भी रीति से प्रसिद्धि में आना चाहिए ।

घटं भित्त्वा पटं छित्त्वा, कृत्वा रासभरोहणं ।
येन केन प्रकारेण, प्रसिद्धः पुरुषो भवेत् ॥ ७२२ ॥

व्यसनों से हानि ।

द्यूतं च मांसं च सुरा च वेश्या, पापर्द्धिचौर्ये परदारसेवा ।
एतानि सप्तव्यसनानि लोके, घोरातिघोरं नरकं नयन्ति ॥
॥ ७२३ ॥

द्यूताद् राज्यविनाशनं नलनृपः प्राप्तोऽथवा पाण्डवाः,
मद्यात्कृष्णनृपश्च राघवपिता पापर्द्धितो दूषितः ।
मांसात् श्रेणिकभूपतिश्च नरके चौर्याद्विनष्टा न के ?
वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीमृतो रावणः ॥७२४॥

तात्कालिक पाप को कौन नष्ट करता है ?

सद्यः प्रीतिकरो नादः, सद्यः प्रीतिकराः स्त्रियः
सद्यः शीतहरो वह्निः, सद्यः पापहरो जिनः ॥७२५॥

दानादि कैसे निष्फल जाते हैं ?

दानं पूजा तपश्चैव, तीर्थसेवा श्रुत तथा ।
सर्वमेव वृथा तस्य, यस्य शुद्ध न मानसम् ॥७२६॥

किसका शकुन अच्छा होता है ? ।

वामस्वरा शिवा श्रेष्ठा, पिंगला दक्षिणस्वरा ।
प्रदक्षिणा च वामा च, कोकिला सिद्धिदायिनी ॥७२७॥

भाग्यको भी विचार करना पड़ता है।

उद्यमः साहसं धैर्यं, बल बुद्धिः पराक्रमः।
षडेते यस्य विद्यन्ते, तस्य देवोऽपि शङ्कते ॥ ७२८ ॥

लक्ष्मी कहा स्थिर नहीं होती ? ।

वेश्यासक्तस्य चौरस्य, द्यूतकारस्य पापिनः ।
अन्यायोपार्जकस्यैव, पुंसो लक्ष्मीः स्थिरा नहि॥७२९॥

कौनसा पुरुष माननीय होता है ? ।

दानेन लक्ष्मीर्विनयेन विद्या, नयेन राज्य सुकृतेन जन्म ।
परोपकारक्रिययाऽपि कायः, कृतार्थ्यते येन पुमान् स मान्य॰
॥ ७३० ॥

धन ही पुरुषका सखा मित्र है ।

त्यजन्ति मित्राणि धनैर्विहीनं, पुत्राश्च दाराश्च सहोदराश्च ।
तमर्थवन्त पुनराश्रयन्ति, अर्थो हि लोके पुरुषस्य बन्धुः
॥ ७३१ ॥

बिना पढे पण्डित और पढे हुए कतिपय मूर्ख—

अपठाः पण्डिताः केचित्, केचित्पठितपण्डिताः ।
अपठा मूर्खकाः केचित्, केचित् पठितमूर्खकाः ॥७३२॥

दम्भ हानिकर्ता है ।

विद्यादम्भः क्षणस्थायी, दानदम्भो दिनत्रयम् ।
रसदम्भस्तु षण्मासान्, धर्मदम्भस्तु दुस्तरः ॥७३३॥

ऐसे राजाको धिक्कार हो जो निर्दय है—

पदे पदे सन्ति भटा रणोद्भटा, न तेषु हिंसारस एषः पूर्यते।
धिगीदृशं ते नृपते कुविक्रमं, कृपाश्रये यः कृपणे पतत्रिणि॥
॥ ७३४ ॥

न वासयोग्या वसुधेयमीदृश—
स्त्वमङ्ग यस्याः पतिरुज्झितस्थितिः ।
इति प्रहाय क्षितिमाश्रिता नभः—
खगास्तमाचुक्रुशुरारवैः खलु ॥ ७३५ ॥

धिगस्तु तृष्णातरलं भवन्मनः, समीक्ष्य पक्षान्मम हेमजन्मनः।
तवार्णवस्येव तुषारसीकरै—र्भवेदमीभिः कमलोदयः कियान् ॥

ब्राह्मणपुत्रका वक्तव्य ।

सतिक्ता ढेकरा यान्ति, सशब्दापानवायवः ।
पुनंरामन्त्रणं प्राप्तं, किं करवाणि तात भोः ! ॥७३७॥

पिता कहता है।

परान्नं प्राप्य दुर्बुद्धे !, मा प्राणेषु दया कुरु।
परान्नं दुर्लभं मन्ये, प्राणा जन्मनि जन्मनि ॥ ७३८॥

पूजारी शब्दकी व्युत्पत्ति।

पूर्वजन्मनि पूतत्वा-ज्जारत्वादिह जन्मनि।
अरित्वाद्देवपूजायां, पूजारीत्यभिधीयते ॥ ७३९॥

पुरोहित शब्दकी व्युत्पत्ति।

पुरीपस्य च रोपस्य, हिंसायास्तस्करस्य च।
आद्याक्षराणि संगृह्य, वेधाश्चक्रे पुरोहितम् ॥ ७४० ॥

भिक्षु और राजाकी साम्यता।

पृथुकार्त्तस्वरपात्रं, भूषितनिःशेषपरिजनं देव !।
विलसत्करेणुगहनं, सम्प्रति सममावयोः सदनम्॥७४१॥

धनपाल कविका राजाके प्रति कथन।

अहो ! खलभुजंगस्य, विचित्रोऽयं वधक्रमः।
अन्यस्य दशति श्रोत्र-मन्यः प्राणैर्वियुज्यते ॥ ७४२॥

स्वभावकी अतिरेकता।

न धर्मशास्त्रं पठतीति कारणं,
न चापि वेदाध्ययनं दुरात्मनः
स्वभाव एवात्र तथातिरिच्यते,
यथा प्रकृत्या मधुरं गवां पयः ॥ ७४३॥

विद्याका अध्ययन सहेल नही है ।

नानुद्योगवता न च प्रवसता मानं न चोत्कर्षता,
नालस्योपहतेन नान्यमनसा नाचार्यविद्वेषिणा ।
न भ्रूभंगकटाक्षसुन्दरमुखीं सीमन्तिनीं ध्यायता,
लोके ख्यातिकरः सतां बहुमतो विद्यागुणः प्राप्यते॥७४४॥

श्रीशीतलनाथ तीर्थंकरका पृथक् २ वर्णमें रहा हुआ महत्त्व ।

आद्येन हीनं जलधावदृष्टं, मध्येन हीनं भुवि वर्णनीयम् ।
अन्त्येन हीनं धुनुते शरीरं, तन्नामकं तीर्थपतिं नमामि ॥
"शीतल" ॥ ७४५ ॥

दरिद्रताकी शंकासे लोभी और दाता क्या करते है ।

लुब्धो न विसृजत्यर्थं, नरो दारिद्र्यशंकया ।
दाताऽपि विसृजत्यर्थं, तयैव ननु शंकया ॥ ७४६ ॥
ध्येयस्त्वं सर्वसत्त्वानामन्यं ध्यायसि न प्रभो ! ।
पूज्यस्त्वं विबुधेशाना-मपि पूज्यो न ते क्वचित्॥७४७॥
आद्यस्त्वं जगतां नाथ, नैवाद्यः कोऽपि ते प्रभो ! ।
स्तुत्यस्त्वं स्तूयसे नान्यं, जगदीश्वरभावतः ॥ ७४८ ॥
शरण्यस्त्वं हि सर्वेषां, न कोऽपि शरणं तव ।
त्वं प्रभुर्विश्वविश्वस्य, प्रभुरन्यो न ते जिन ! ॥ ७४९ ॥
मुक्तिसौख्यं त्वदायत्तं, तद्दाता यत्परो नहि ।
परात्परतस्त्वं हि, तवास्ति न परः क्वचित् ॥ ७५० ॥

नमस्तुभ्यं भवाम्भोधि–यानपात्राय तायिने।
त्वत्तः शिवसुखानंदं, प्रार्थये नतवत्सल ! ॥ ७५१ ॥

तव प्रेष्योऽस्मि नाथाहं, त्वत्तो नाथामि नाथताम्।
जगच्छरण्य ! मा रक्ष, प्रसीद परमेश्वर ! ॥ ७५२ ॥

क्वाहं बुद्धिधनैर्हीनः, क्व च त्वं गुणसागर ।
तथापि त्वा स्तवीम्येष, त्वद्भक्तिमुखरीकृतः ॥ ७५३ ॥

त्वया हतास्तपोऽस्त्रेण, सर्वथान्येन दुर्जयाः ।
रागाद्या रिपवः स्वामि–न्नात्मनः स्वार्थघातकाः ॥७५४॥

रागाद्यै रिपुभिर्देवा भापा अन्यैर्विडंबिताः,
पश्यंति ते बहिः शत्रून् विहायार्तनिकेतिन ॥ ७५५ ॥

अनन्तज्ञानमाहात्म्यवारिधे ! चतुरप्रभो ! ।
जगत्प्रदीप ! भगवन् ! नाभेय ! भवते नमः ॥७५६॥

अष्टांगानि तथा नाथ ! भवान् योगस्य निर्ममे ।
यथा तानि प्रवर्तन्ते, कर्माष्टकनिपिष्टये ॥ ७५७ ॥

शत्रुंजयशिरोरत्न, श्रीनाभिकुलभास्करम् ।
स्वर्गापवर्गव्यापार, निदान त्वा विभो स्तुमः ॥ ७५८ ॥

रत्नेन काञ्चनमिव, तेजसेव नभोमणिः ।
अलंकृतं त्वया नाथ तीर्थं शत्रुंजय ह्यदः ॥ ७५९ ॥

नाभ्यर्थये स्वर्गसुखं, न मोक्षं न नराश्रियम् ।
सदा त्वत्पादपद्मानि, वसन्तु मम मानसे ॥ ७६० ॥

दानेन प्राप्यते लक्ष्मीः, शीलेन सुखसंपदा ।
तपसा क्षीयते कर्म, भावना भवनाशिनी ॥ ७६१ ॥

आग्रही वत निनीषति युक्तिं, तत्र यत्र मतिरस्य निविष्टा ।
पक्षपातरहितस्य तु युक्ति–र्यत्र तत्र मतिरेति निवेशम् ॥७६२॥

त्रयः स्थानं न मुञ्चंति, काकाः कापुरुषा मृगाः ।
अपमाने त्रयो यान्ति, सिंहाः सत्पुरुषा गजाः ॥ ७६३ ॥

उत्तमाः स्वगुणैः ख्याता, मध्यमास्तु पितुर्गुणैः ।
अधमा मातुलैः ख्याताः, श्वशुरैरधमाधमाः ॥ ७६४ ॥

स्त्रीजातौ दाम्भिकता, भीलुकता भूयसी वणिग्जातौ ।
रोषः क्षत्रियजातौ, द्विजातिजातौ पुनर्लोभः ॥ ७६५ ॥

विरोधो नैव कर्त्तव्यः, साक्षरेभ्यो विशेषतः ।
त एव विपरीताः स्यु, राक्षसा एव केवलम् ॥ ७६६ ॥

अनुचितकर्मारंभः, स्वजनविरोधो बलीयसा स्पर्धा ।
प्रमदाजनविश्वासो, मृत्युद्वाराणि चत्वारि ॥ ७६७ ॥

कान्तावियोगः स्वजनापमानं,
रणस्य भीतिः कुजनस्य सेवा ।
दरिद्रभावः खलसंगमश्च,
विनाग्निना पंच दहन्ति देहम् ॥ ७६८ ॥

भिक्षुर्विलासी निर्धनश्च कामी,
वृद्धो विटः प्रव्राजितश्च मूर्खः ।
पण्यांगना रूपविलासहीना,
प्राजायत दुश्चरितानि पंच ॥ ७६९ ॥

अपरीचितं न कर्त्तव्य, कर्त्तव्य सुपरीचितम् ।
पश्चाद्भवति सतापो, ब्राह्मणी नकुल यथा ॥ ७७० ॥

शकटात्पचहस्तेषु, दशहस्तेषु वाजिनः ।
हस्तिनः शतहस्तेषु, देशत्यागश्च दुर्जनात् ॥ ७७१ ॥

न विश्वसेत्पूर्वविरोधितस्य, शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धा गुहा पश्य उलूकपूर्णा, काकप्रकीर्णेन हुताशनेन

राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः ।
राजानमनुवर्तन्ते, यथा राजा तथा प्रजाः ॥ ७७२ ॥

शास्त्रे सुनिश्चितधिया परिचिन्तनीय–
माराधितोऽपि नृपतिः परिशकनीयः ।
अंके स्थिताऽपि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ? ॥ ७७३ ॥

हावो मुखविकारः स्याद्, भावश्चित्तसमुद्भवः ।
विलासो नेत्रजो ज्ञेयो, विभ्रमो भ्रूसमुद्भवः ॥ ७७४ ॥

गतानुगतिको लोको, न लोकः पारमार्थिकः ।
शोको राजकुले सर्वे, कुन्तकुन्मदने मृते ॥ ७७५ ॥

दश धर्म न जानन्ति, धृतराष्ट्र निबोधनात् ।
मूर्ख प्रमत्त उन्मत्तः, क्रुद्ध श्रान्तो बुभुक्षितः
त्वरमाणश्च रक्तश्च लुब्धकामी च ते दश ॥ ७७६ ॥

मांसास्वादनलुब्धस्य, देहिन देहिन प्रति ।
हन्तुं प्रवर्तते बुद्धिः, शाकिन्या इव दुर्धियः ॥ ७७७ ॥

कालेन पच्यते धान्यं, फलं कालेन पच्यते ।
वयसा पच्यते देहं, पापी पापेन पच्यते ॥ ७७८ ॥

अभ्रच्छाया तृणाग्निश्च, स्थले जलं खले प्रीतिः ।
वेश्यारागः कुमित्रं च, षडेते बुद्बुदोपमाः ॥ ७७६ ॥

दशशूनासमश्चक्री, दशचक्रिसमो द्विजः ।
दशद्विजसमा वेश्या, दशवेश्यासमो नृपः ॥ ७८० ॥

मद तीन प्रकारका है ।

मत्तस्तु मदिरामत्तः, प्रमत्तो धनगर्वितः ।
उन्मत्तः स्त्रीमदांधश्च, मदत्रयमुदाहृतम् ॥ ७८१ ॥

स्त्रीयोंका विश्वास मत करो ।

अपसेत्ववटे नीरं, चालिन्यां सूक्ष्मपिष्टकम् ।
स्त्रीणां च हृदये वार्ता, न तिष्ठन्ति कदाचन ॥ ७८२ ॥

इनके उपर उपकार नहीं हो सकता ।

जामाता कृष्णसर्पश्च, नापितो दुर्जनस्तथा ।
उपकारैर्न गृह्यन्ते, पंचमो भागिनेयकः ॥ ७८३ ॥

कृपण दान या भोग नही कर सकता है ।

न दातुं नोपभोक्तुं च, शक्नोति कृपणः श्रियम् ।
किन्तु स्पृशति हस्तेन, नपुंसक इव स्त्रियम् ॥ ७८४ ॥

गुप्त बात स्त्रीयोंको नही कहना चाहिए ।

स्त्रीणां गुह्यं न वक्तव्यं, प्राणैः कण्ठगतैरपि ।
नीतो हि पक्षिराजेन, पद्मरागो यथा फणी ॥ ७८५ ॥

दुष्टानां दुर्जनानां च, पापिना क्रूरकर्मणाम्।
अनाचारप्रवृत्तानां, पापं फलति तद्भवे ॥ ७८६ ॥

परोपकारः कर्त्तव्यः, प्राणैरपि धनैरपि।
परोपकारजं पुण्य, न स्याद्यज्ञशतैरपि ॥ ७८७ ॥

तीर्थस्नानैर्न सा शुद्धि-र्बहुदानैर्न तत्फलं।
तपोभिरुग्रैस्तन्नाप्य-मुपकाराद्यदाप्यते ॥ ७८८ ॥

उदयति यदि भानुः पश्चिमाया दिशायां
विकसति यदि पद्म पर्वताग्रे शिलायाम्।
प्रचलति यदि मेरुः शीतता याति वह्नि-
स्तदपि न चलतीयं भाविनी कर्मरेखा ॥ ७८९ ॥

शम्भुस्वयम्भूहरयो हरिणेक्षणाना,
येनाक्रियन्त सततं गृहकुम्भदासाः।
वाचामगोचरचरित्रविचित्रिताय,
तस्मै नमो भगवते मकरध्वजाय ॥ ७९० ॥

दैत्येन दानवेनैव, राज्ञा सिंहेन हस्तिना।
स्वमा ताड्यमानोऽपि, न गच्छेच्छ्वपमन्दिरम् ॥ ७९१ ॥

पञ्चापि मम रोचन्ते, पाण्डवास्तात ! सुन्दराः।
तथापि बलीयान् कामो, मतिः षष्ठेऽपि जायते ॥ ७९२ ॥

तारुण्य द्रुममञ्जरी किमथवा कन्दर्पमंजीरनी,
किं लावण्यनिधानभूमिरथवा सपूर्णचन्द्रावली।
किं नारी किमु किन्नरी किमथवा विद्याधरी वाप किं,
केय केन कियद्भिरेव क्रियता कस्मै कय निर्मिता ? ॥७९३॥

किं पुनः स्मरविस्मेरा, विस्फारितविलोचनः ।
विवेकी यत् श्रियं प्राप्य, सत्कार्ये न प्रणोद्यति ॥८११॥

आवर्तः संशयानामविनयभवनं पत्तनं साहसानां,
दोषाणां संनिधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् ।
दुर्ग्राह्यं यन्महाद्भिर्नरवरवृषभैः सर्वमायाकरण्डं,
स्त्रीयन्त्रं केन लोके विषममृतमयं शर्मनाशाय सृष्टम् ? ॥
॥ ८१२ ॥

निषिद्धमप्याचरणीयमापदि, क्रिया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथे हि पिच्छिले, कचिद् बुधै रथ्यापथेन गम्यते
द्वयं गतं संप्रति शोचनीयतां, समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्र-
कौमुदी ॥ ८१३ ॥

शत्रुंजयः शिवपुरं, नदी शत्रुंजयाभिधा ।
श्रीशान्तिः शमिनां दानं, शकाराः पंच दुर्लभाः॥८१४॥

प्राप्तुं पारमपारस्य पारावारस्य पार्यते ।
स्त्रीणां प्रकृतिवक्राणां दुश्चरित्रस्य नो पुनः ॥ ८१५ ॥

षट्कर्णो भिद्यते मंत्र-श्चतुष्कर्णो न भिद्यते ।
द्विकर्णस्य तु मंत्रस्य, ब्रह्माप्यन्तं न गच्छति ॥८१६॥

लंकेशोऽपि दशाननोऽपि विजिताशेषत्रिलोकोऽपि सन्,
रक्षोलक्षयुतोऽपि सेन्द्रजिदपि व्यापाद्यते रावणः ।

निःस्वेनैव सुखेन काननजुषा सर्वेण मर्त्येन यत्,
रामेणामिततेजसा जनकजाशीलस्य तद्वल्गितम् ॥
॥ ८१७ ॥

अर्द्धाङ्गे गिरिजां बिभर्ति गिरीशो विष्णुर्वहत्यन्वहं,
शस्त्रश्रेणिमथाऽचसूत्रवलय धत्ते च पद्मासनः ।
पौलोमीचरणाहतिं च सहते धृष्टः सहस्रेक्षण-
स्तन्मोहस्य विजृम्भितं निगदितं तिर्यग्जने का कथा ?
॥ ८१८ ॥

ब्रह्मचारि-यतीनां च, विधवानां च योषिता ।
ताम्बूलभक्षण विप्र!, गोमांसान्न विशिष्यते॥ ८१९ ॥

देय भोज[1] धनं धनं सुकृतिभिर्नो संचनीयं कदा,
श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिता ।
अस्माकं मधु दानभोगरहितं कष्टैश्चिरात्सेवित,
लुप्त तन्मधु पादपाणियुगलं घर्षत्यसौ मक्षिका ॥८२०॥

प्रातः द्यूतप्रसगेन, मध्याह्ने स्त्रीप्रसंगतः ।
सायं चौरप्रसंगेन, कालो गच्छति धीमताम् ॥ ८२१ ॥

तथापि चित्रमुत्पद्य-कालक्षेपः करिष्यते ।
कालक्षेपाद्यदि पुनः, प्रभो कोऽपि निवर्तते ॥ ८२२ ॥

शुद्धान्तसंभोगनितान्ततुष्टे, न नैषधे कार्यमिदं निगाधम्।
अपा हि तृप्ताय न वारिधारा, स्वादुः सुगन्धि स्वदते तु-
षारा ॥ ८२३ ॥

गुरुत्यागे भवेद्दुःखी, मन्त्रत्यागे दरिद्रता ।
गुरुमंत्रपरित्यागे, सिद्धोऽपि नरकं व्रजेत् ॥ ८२४ ॥

देवा दैवीं नरा नारीं, शवराश्च शावरीम् ।
तिर्यञ्चोऽपि तैरश्चीं, मेनिरे भवतो गिरम् ॥ ८२५ ॥

दाने तपसि शौर्ये, यस्य न प्रथितं मनः ।
विद्यायामर्थलाभे वा, मातुरुच्चार एव सः ॥ ८२६ ॥

कलारत्नं काव्यं, श्रवणसुखरत्नं हरिकथा,
रणे रत्नं वाजी, गगनमुखरत्नं दिनकरः ।
निशारत्नं चंद्रः, शयनसुखरत्नं शशिमुखी,
सभारत्नं विद्या, जयति नृपरत्नं रघुकुलः ॥ ८२७ ॥

काया हंसविना नदी जलविना दातुर्विना याचकाः;
भ्राता स्नेहविना कुलं सुतविना धेनुश्च दुग्धं विना ।
भार्या भक्तिविना पुरं नृपविना वृक्षं च पत्रं विना,
दीपः स्नेहविना शशी निशि विना धर्मं विना मानवाः ८२८

हसंति पृथिवी नृपतोऽपि राजा, हसंती कालो गम वैद्यराज।
हसंती भार्या व्यभिचारणी च, हसंती लक्ष्मीः कृपणे गृहे च॥
॥ ८२९ ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी,
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या,
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ८३० ॥

आभिग्गहियमणाभिग्गह च अनिवेसिय चेव ।
संसइयमणाभोग मिच्छत्त पचहा होइ ॥ ८३१ ॥

जन्मिनां प्रकृतिर्मृत्युर्विकृतिर्जीवित पुन ।
तत स्वभावसिद्धेऽर्थे, को विषादो विवेकिनः ॥ ८३२ ॥

न स्वादु नौषधमिद न च वा सुगन्धि
नाक्षिप्रिय किमपि शुष्कतमाखुचूर्णम् ।
किं चाक्षिरोगजनकं च तदस्य भोगे
बीज नृणा नहि नहि व्यसन विनान्यत् ॥८३४॥

या मतिर्जायते पश्चात्सा यदि प्रथम भवेत् ।
न विनश्येत् तदा कार्य, न हसेत् कोऽपि दुर्जनः ॥८३४॥

विषस्य विषयाणां च, दृश्यते महदन्तर ।
उपभुक्तं विषं हति, विषयाः स्मरणादपि ॥ ८३५ ॥

अभक्ष्यभक्षणाद् दोषात् कण्ठरोगः प्रजायते ॥ ८३६ ॥

कन्याविक्रयिणश्चैव रसविक्रयिणस्तथा ।
विषविक्रयिणश्चैव नरा नरकगामिनः ॥ ८३७ ॥

कोटं च बूट–पटलौन कौश्च मुखे च धुम्रं सिगरेट पिरन्तम् ।
घडी छडी गन्ध लवण्डरं च जानन्ति सर्वे कुलधर्ममेवम् ॥
॥ ८३८ ॥

ध्यानं दुःखनिधानमेव तपसां संतापमात्र फल,
स्वाध्यायोऽपि हि वन्ध्य एव कुधियां तेऽभिग्रहाः कुग्रहाः ।

अश्लीला खलु दानशीलतुलना तीर्थादियात्रा वृथा,
सम्यक्त्वेन विहीनमन्यदपि यत्तत्सर्वमंतर्गडु ॥ ८३९ ॥

लुद्धा नरा अत्थपरा हवंति, मूढा नरा कामपरा हवंति ।
बुद्धा नरा खंतिपरा हवंति, मिस्सा नरा तिन्नि वि आयरंति
॥ ८४० ॥

कोहाभिभूया न सुहं लहंति,
माणंसिणो सोयपरा हवंति ।
मायाविणो हुंति परस्स पेसा,
लुद्धा महिच्छा नरयं उवंति ॥ ८४१ ॥

न सेवियव्वा पमया परक्का,
न सेवियव्वा पुरिसा अविज्जा ।
न सेवियव्वा अहिया निहीणा,
न सेवियव्वा पिसुणा मणुस्सा ॥ ८४२ ॥

दानं दरिद्दस्स पहुस्स खंती, इच्छा निरोहो च सुहोइयस्स ।
तारुण्णए इंदियनिग्गहो य, चत्तारि एयाइं सुदुक्कराइं ॥८४३॥

जूए पसत्तस्स धनस्स नासो, मंसे पसत्तस्स दयाई नासो ।
मज्झे पसत्तस्स जसस्स नासो, वेसापसत्तस्स कुलस्स नासो
॥ ८४५ ॥

असासयं जीवियमाहु लोए, धम्मं चरे साहु जिणोवइट्ठं ।
धम्मो य ताणं सरणं गई य, धम्मं निसेवित्तु सुहं लहंति ८४५

नयास्तव स्यात्पदलाञ्छना इमे
रसोपविद्धा इव लोहधातवः ।

भवन्त्यभिप्रेतफला यतस्ततो
भवन्तमार्याः प्रणता हितैषिणः ॥ ८४६ ॥

औषधं शकुनं मन्त्रं, नक्षत्रं गृहदेवता ।
भाग्यकाले प्रसीदन्ति, अभाग्ये यान्ति विक्रियाम् ॥८४७॥

अग्निर्विप्रो यमो राजा, समुद्र उदरं स्त्रियः
अतृप्ता नैव तृप्यन्ति, याचन्ते च दिने दिने ॥ ८४८ ॥

स्त्रीचरित्रं प्रेमगतिं, मेघोत्थानं नरेन्द्रचित्तं च ।
विषमविधिविलसितानि च को वा शक्नोति विज्ञातुम् ८४९

सत्येन धार्यते पृथ्वी, सत्येन तपते रविः
सत्येन वायवो वान्ति, सर्वं सत्ये प्रतिष्ठितम् ॥ ८५० ॥

अतर्विषमा हि ता ज्ञेया, वहिरेव मनोहराः ।
गुंजाफल समाकारा, योषितः केन निर्मिताः ॥ ८५२ ॥

कुटिलगतिः कुटिलमतिः, कुटिलात्मा कुटिलशीलसपन्ना ।
सर्वं पश्यति कुटिल कुटिलः कुटिलेन भावेन ॥ ८५३ ॥

संपीन्याहिदंष्ट्राऽग्नि–यम जिह्वा–विषव्रजात् ।
जगज्जिघांसुना नार्यः कृता क्रूरेण वेधसा ॥ ८५५ ॥

समेषु शौर्यं प्रशमं महत्सु नीचेष्ववज्ञा प्रणतेषु मानं ।
ऋजत्व निपुणे विदध्याद् धूर्तेषु कुर्यादतिधूर्तभावम् ॥८५६॥

वारिदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः ।
तिलप्रदः प्रजामीष्टामायुष्कमभयप्रदः ॥ ८५७ ॥

रुधिरमांसमेदोऽस्थि. मलमूत्रादिपूरितम् ।
नवद्वार स्रवस्य रसक्लिन्नमिदं वपुः ॥ ८५९ ॥

वणिक्कृपण्यांगना दस्युर्द्यूतकृत्पारदारिकः ।
स्वार्थसाधकनिद्रालु सप्तासत्यस्य मन्दिरम् ॥ ८६० ॥

गुर्वेकवाक्यादपि पापभीता, राज्यं त्यजन्ति स्म नरा हि सन्तः
व्याख्यासहस्रैर्न भवेद् विरागो, ध्रुवं कलौ वज्रहृदो मनुष्याः
॥ ८६१ ॥

अङ्गं गलितं पलितं मुण्डं,
जातं दशनविहीनं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं
तदपि न मुञ्चत्याशापिण्डम् ॥ ८६२ ॥

लक्ष्मीः कौस्तुभपारिजातकसुराः धन्वंतरिश्चंद्रमाः
गावः कामदुघाः सुरेश्वरगजो रंभादिदेवांगनाः ।
अश्वः सप्तमुखो विषं हरिधनुः शंखोऽमृतं चांबुधेः
रत्नानीह चतुर्दश प्रतिदिनं कुर्यात् सदा मंगलम् ॥८६३॥

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसंपन्नशस्या,
पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः ।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः८६४

असितगिरिसमं स्यात् कज्जलं सिंधुपात्रे,
सुरतरुवरशाखा लेखिनी पत्रमुर्वी ।

लिखति यदि गृहीत्वा शारदा सर्वकालम्,
तदपि तव गुणानां ईश ! पार न याति ॥ ८६५ ॥

जगन्मातर्मातस्तव चरणसेवा न रचिता,
न वा दत्तं देवि द्रविणमपि भूयस्तव मया ।
तथापि त्व स्नेह मयि निरुपमं यत् प्रकुरुषे,
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥८६६॥

घृष्टं घृष्ट पुनरपि पुनश्चन्दनं चारुगन्ध
छिन्न छिन्न पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् ।
दग्ध दग्ध पुनरपि पुनः काञ्चन कान्तवर्णम्
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥८६७॥

मुक्त्वा निःश्रीकमप्यब्जं मराली न गतान्यतः ।
भ्रमराली त्वगाद् वेगादिदं सदसदन्तरम् ॥ ८६८ ॥

असद्भिः शपथेनोक्त जले लिखितमक्षरम् ।
सद्भिस्तु लीलया प्रोक्त शिलालिखितमक्षरम् ॥८६९॥

आपदो महतामेव महतामेव संपदः ।
क्षीयते वर्धते चन्द्रः कदाचिन्नैन तारकाः ॥ ८७० ॥

गुणग्रामाविसंवादि नामापि हि महात्मनाम् ।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ ८७१ ॥

किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् ।

कुम्भा न कूपमपि शोषयितुं समर्थाः
कुम्भोद्भवेन मुनिनाम्बुधिरेव पीतः ॥ ८७२ ॥

अन्या जगद्धितमयी मनसः प्रवृत्तिः
अन्यैव कापि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरार्तहृद्या
विद्यावतां सकलमेव चरित्रमन्यत् ॥ ८७३ ॥

तरुमूलादिषु निहितं, जलमाविर्भवति पल्लवाग्रेषु ।
निभृतं यदुपाक्रियते, तदपि महांतो वहंत्युच्चैः ॥ ८७४ ॥

अहो किमपि चित्राणि चरित्राणि महात्मनाम् ।
लक्ष्मीं तृणाय मन्यन्ते तद्भरेण नमन्त्यपि ॥ ८७५ ॥

मौने मौनी गुणिनि गुणवान् पण्डिते पण्डितोऽसौ
दीने दीनः सुखिनि सुखवान् भोगिनि प्राप्तभोगः ।
मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी
धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥ ८७६ ॥

केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ
विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः ।
विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः
श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥८७७॥

दुर्जनस्वभावः ।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥८७८॥

अनुकुरुतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः ।
विदधाति रन्ध्रमेको गुणवानन्यस्तु पिदधाति ॥ ८७९ ॥

त्यजन्ति शूर्पवद् दोषान् गुणान् गृह्णन्ति साधवः ।
दोषग्राही गुणत्यागी चालिनीव हि दुर्जनः ॥ ८८० ॥

रविरपि न दहति तादृग् यादृक् सदहति वालुकानिकरः ।
अन्यस्माल्लब्धपदः प्रायो नीचोऽपि दुःसहो भवति ॥८८१॥

शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ८८२॥

उपकारोऽपि नीचानामपकारो हि जायते ।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ ८८३ ॥

मुखं पद्मदलाकारं वाणी चन्दनशीतला ।
हृदयं कर्तरीतुल्यं त्रिविधं धूर्तलक्षणम् ॥ ८८४ ॥

नलिकागतमपि कुटिलं, न भवति सरलं शुनः पुच्छम् ।
तद्वत् खलजनहृदयं, बोधितमपि नैव याति माधुर्यम् ॥८८५

बोधितोऽपि बहुसूक्तिविस्तरैः
किं खलो जगति सज्जनो भवेत् ।
स्नापितोऽपि बहुशो नदीजलै—
र्गर्दभः किमु हयो भवेत् क्वचित् ॥ ८८६ ॥

न देवाय न धर्माय न बन्धुभ्यो न चार्थिने ।
दुर्जनेनार्जितं द्रव्यं भुज्यते राजतस्करैः ॥ ८८७ ॥

मूर्खस्य पंच चिह्नानि गर्वी दुर्वचनी तथा ।
हठी चाप्रियवादी च परोक्तं नैव मन्यते ॥ ८८८ ॥

काकस्थ कति वा दंता मेषस्यांडे कियत् पलम् ।
गर्दभे कति रोमाणि व्यर्थैषा तु विचारणा ॥ ८८६ ॥

गर्गो हि पादशौचात् लघ्वासनदानतो गतः सोमः ।
दत्तः कुदशनभोज्यात् श्यामलकश्चार्धचंद्रेण ॥ ८६० ॥

अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद् दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ ८६१ ॥

क्षणे तुष्टाः क्षणे रुष्टास्तुष्टा रुष्टाः क्षणे क्षणे ।
अव्यवस्थितचित्तानां प्रसादोऽपि भयंकरः ॥ ८९२ ॥

यस्यास्ति सर्वत्र गतिः स कस्मात्
स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति ॥ ८९३ ॥

दैवविलास—

सच्छिद्रो मध्यकुटिलः कर्णः स्वर्णस्य भाजनम् ।
धिग् दैवं विमले नेत्रे पात्रं कज्जलभस्मनः ॥ ८९४ ॥

आपद्गतं हससि किं द्रविणान्धमूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान् प्रपश्यसि घटान् जलयन्त्रचक्रे
रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥८९५॥

अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न लिप्येरन् नलराजयुधिष्ठिराः ॥ ८९६ ॥

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितु न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत् परेषाम् ॥ ८९७ ॥

लिखिता चित्रगुप्तेन ललाटेऽक्षरमालिका ।
तां देवोऽपि न शक्नोति उल्लिख्य लिखितु पुनः ॥८९८॥

शशिदिवाकरयोर्ग्रहपीडनम्
गजभुजंगमयोरपि बन्धनम्
मतिमतां च विलोक्य दरिद्रताम्
विधिरहो बलवानिति मे मतिः ॥ ८९९ ॥

तुष्टो हि राजा यदि सेवकेभ्यो
भाग्यात् पर नैव ददाति किंचित् ।
अहर्निशं वर्षति वारिवाह॰
तथापि पत्रत्रितयः पलाशः ॥ ९०० ॥

अश्वं नैवं गजं नैव व्याघ्र नैव च नैव च ।
अजापुत्र बलिं दद्याद् देवो दुर्बलघातकः ॥ ९०१ ।

यः सुन्दरस्तद्वनिता कुरूपा
या सुंदरी सा पतिरूपहीना ।
यत्रोभय तत्र दरिद्रता च
विधेर्विचित्राणि विचेष्टितानि ॥ ९०२ ॥

व्याघ्रे च महदालस्यं सर्पे चैव महद्भयम् ।
पिशुने चैव दारिद्र्यं तेन जीवन्ति जन्तवः ॥ ९०३ ॥

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किम्
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणम्
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ९०४

अधः पश्यसि किं बाले पतितं तव किं भुवि ।
रे रे मूढ न जानासि गतं तारुण्यमौक्तिकम् ॥ ९०५ ॥

चतुरः सखि मे भर्ता यल्लिखति तत् परो न वाचयति
तस्मादप्यधिको मे स्वयमपि लिखितं स्वयं न वाचयति
॥ ९०६ ॥

दश व्याघ्राः जिताः पूर्वं सप्त सिंहास्त्रयो गजाः ।
पश्यन्तु देवताः सर्वाः अद्य युद्धं त्वया मम ॥ ९०७ ॥

गच्छ सूकर भद्रं ते ब्रूहि सिंहो मया जितः ।
पण्डिता एव जानन्ति सिंहसूकरयोर्बलम् ॥ ९०८ ॥

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसंनिपाते
निमज्जतींदोः किरणेष्विवांकः ॥ ९०९ ॥

एको हि दोषो गुणसंनिपाते
निमज्जतींदोरिति यो बभाषे ।

नूनं न दृष्टं कविनाऽपि तेन
दारिद्र्यदोषो गुणराशिनाशी ॥ ९१० ॥

कस्त्वं लोहितलोचनास्यचरण हंस' कुतो मानसात्
किं तत्रास्ति सुवर्णपङ्कजवनान्यम्भः सुधासन्निभम् ।
रत्नाना निचयाः प्रवाललतिका वैडूर्यरोहः क्वचित्
शम्बूका न हि सन्ति नेति च बकैराकर्ण्य हीही कृतम् ९११

गृह्णात्येष रिपोः शिरः प्रजविन कर्षत्यसौ वाजिनम्
धृत्वा धर्म धनु॰ प्रयाति पुरतः संग्रामभूमावपि ।
द्यूतं चौर्यकथा तथा च शपथ कुर्यान्न वामः करो
दानानुद्यमतां विलोक्य विधिना शौचाधिकारी कृतः ९१२
विप्रास्मिन् नगरे महान् कथयता तालद्रुमाणां गणः
को दाता रजको ददाति वसन प्रातर्गृहीत्वा निशि ।
को दक्षः परवित्तदारहरणे सर्वोऽपि दक्षो जनः
कस्माज्जीवसि हे सखे विषकृमिन्यायेन जीवाम्यहम् ॥९१३

भूरिभारभराक्रान्तो बाधति स्कन्ध एष ते
न तथा बाधते स्कन्धो यथा बाधति बाधते ॥९१४॥

निरर्थकं जन्म गत नलिन्या
यया न दृष्ट तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव
कृता विनिद्रा नलिनी न येन ॥ ९१५ ॥

भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना
स रामो मे स्थाता न युधि पुरतो लक्ष्मणसखः ।

इयं यास्यत्युच्चैर्विपदमधुना वानरचमूः
लघिष्ठेदं षष्ठाक्षरपरविलोपात् पठ पुनः ॥ ९१६ ॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुंजितो न यो
न गुंजितं तन्न जहार यन्मनः ॥ ९१७ ॥

भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यान्
ते वै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम् ।
दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्तास्मि येषाम्
चौरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः
॥ ९१८ ॥

आदिमध्यान्तरहितं दशाहीनं पुरातनम् ।
अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥ ९१९ ॥

कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किम्
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात् ।
राधेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्विताम्
इत्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः॥९२०॥

गवीशपत्रो नगजापहारी
कुमारतातः शशिखण्डमौलिः ।
लंकेशसंपूजितपादपद्मः
पायादनादिः परमेश्वरो नः ॥ ९२१ ॥

विना गोरसं को रसः कामिनीनाम्
विना गोरसं को रसः पण्डितानाम् ।

विना गोरसं को रसो भूपतीनाम्
विना गोरसं को रसो भोजनानाम्   ॥ ९२२ ॥

कन्याप्रसूतस्य धनुष्प्रसंगात्
अगाधिकासादितविक्रमस्य ।
धनंजयाधीनपराभवस्य
शीतस्य कर्णस्य च को विशेषः ॥ ९२३ ॥

अहं च त्वं च राजेन्द्र लोकनाथावुभावपि ।
बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान्   ॥ ९२४ ॥

यो रात्रिचरशेखरः किल दशास्यः कोणपाल्याश्रयः
वज्राबाधितशक्तिको नृरुधिरं पातु सदा वाञ्छति ।
उन्मत्तो मधुयोगतो भवति यस्तन्मत्कुणो रावणः
तस्मान्नश्यति पुत्रपौत्रसहितः सीताभिमधानतः ॥ ९२५ ॥

द्वंद्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः   ॥ ९२६ ॥

वनुप्रासे स एव स्याद् अनुप्रासेऽपि स स्मृतः ।
तस्मात् सर्वप्रयत्नेन भवेद् नित्य सुभोजनः   ॥ ९२७ ॥

शूली जातः कदशनवशात्क्षयरोगात् कपाली
वस्त्राभावाद्गगनवसनः स्नेहशून्याज्जटावान् ।
इत्थं राजन् तव परिचयादीश्वरत्वं मयाऽऽप्तम्
तस्मान्मह्यं किमिति कृपया नार्धचंद्रं ददासि   ॥ ९२८ ॥

खलानां धनुषा चापि सद्वंशजनुषामपि ।
गुणलाभो भवेदाशु परहृद्भेदकारकः   ॥ ९२९ ॥

भक्तद्वेषो जडप्रीतिः सुरुचिर्गुरुलङ्घने
मुखे कटुकता नूनं धनिनां ज्वरिणामिव ॥ ९३० ॥

जनस्थाने भ्रान्तं कनकमृगतृष्णाकुलतया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालंकाभर्तुर्वदनपपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥९३१॥

जाता शुद्धकुलं जघान पितरं हत्वापि शुद्धा पुनः
स्त्री चैषा वनिता पितेव सततं विश्वस्य या जीवनम् ।
सङ्गं प्राप्य पितामहेन जनकं प्रासूत या कन्यका
सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥९३२॥

शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः ।
रिपुगर्भस्य यो भर्ता स मे विष्णुः प्रसीदतु ॥ ९३३ ॥

पानीयं पातुमिच्छामि त्वत्तः कमललोचने ।
यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥९३४॥

काचिद् बाला रमणवसतिं प्रेषयन्ती करण्डं
सा तन्मूले सभयमलिखद् व्यालमस्योपरिष्टात् ।
गौरीनाथं पवनतनयं चम्पकं चास्य भावं
पृच्छत्यार्यान् प्रति कथमिदं मल्लिनाथः कवीन्द्रः ॥९३५॥

अपदो दूरगामी च साक्षरो न च पण्डितः ।
अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥ ९३६ ॥

वृक्षाग्रवासी न च पक्षिराजः
त्रिनेत्रधारी न च शूलपाणिः
त्वग्वस्त्रधारी न च सिद्धयोगी
जलं च बिभ्रन् न घटो न मेघः ॥ ९३६ ॥

चक्री त्रिशूली न हरो न विष्णु–
र्महान् बलिष्ठो न च भीमसेनः ।
स्वच्छन्दचारी नृपतिर्न योगी
सीतावियोगी न च रामचंद्रः ॥ ९३७ ॥

अणोरणीयान् महतो महीयान्
योगे वियोगे दिवसः प्रियस्य ।
यज्ञोपवीत परमं पवित्रं
स्पृष्ट्वा सखे सत्यमहं ब्रवीमि ॥ ९३८ ॥

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च ।
अहं कथं द्वितीया स्याद् द्वितीया स्यामहं कथम् ॥ ९३९ ॥

अकुबेरपुरीविलोकनं, न धरासूनुकरं कदाचन ।
अथ तत्प्रतिकारहेतवेऽदमयन्तीपतिलोचन भज ॥ ९४१ ॥

सुतं पतन्तं प्रसमीक्ष्य पावके
न बोधयामास पतिं पतिव्रता ।
तदाऽभवत् तत्पतिभक्तिगौरवात्
हुताशनश्चंदनपङ्कशीतल ॥ ९४२ ॥

राज्याभिषेके मदविह्वलाया
हस्ताच्च्युतो हेमघटस्तरुण्या ।

केचिद् वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ।९५९।

यास्यति जलधरसमयस्तव च समृद्धिर्लघीयसी भविता ।
तटिनि ! तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ९६० ॥

दानार्थिनो मधुकरा यदि कर्णतालैः,
दूरीकृताः करिवरेण मदांधबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृंगाः पुनर्विकचपद्मवने वसन्ति ॥ ९६१ ॥

किं केकीव शिखण्डमण्डिततनुः किं कीरवत् पाठकः,
किं वा हंस इवांगनागतिगुरुः शारीव किं सुस्वरः ।
किं वा हन्त शकुन्तबालपिकवत् कर्णामृतं सिञ्चति,
काकः केन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥९६२॥

स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण सखे
गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि ।
असौ कुंभिभ्रान्त्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ ९६३ ॥

चातकस्य मुखचंचुसंपुटे
नो पतंति यदि वारिबिंदवः ।
सागरीकृतमहीतलस्य किं
दोष एव जलदस्य दीयते ॥ ९६४ ॥

रे रे रासभ ! वस्त्रभारवहनात् कुग्रासमश्नासि किम् ?
राजाश्वावसथं प्रयाहि चणकाभ्यूषान् सुखं भक्षय ।

सर्वान् पुच्छनतो हयानिति नदंत्यत्राधिकारे स्थिता:
राजा तैरुपादिष्टमेव मनुते सत्य तटस्थाः परे ॥९६५॥

त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः ।
अस्माकमर्कवृक्षाणां जीर्णे पत्रेऽपि संशयः ॥९६६॥

गिरिगह्वरेषु गुरुगर्वगुंफितो ।
गजराजपोत न कदापि संचरेः ।
यदि बुध्यते हरिशिशुः स्तनधयो
भविता करेणुपरिशेषिता मही ॥९६७॥

गात्रं कण्टकसङ्कट प्रविरलच्छाया न चायासहृत्
निर्गन्धः कुसुमोत्करस्तव फलं न क्षुद्विनाशक्षमम् ।
बब्बूलद्रुममूलमेति न जनस्तत् तावदास्तामहो
अन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥९६८॥

साधारणतरुबुद्ध्या न मया रचितस्तवालवालोऽपि ।
लज्जयसि मामिदानीं चंपक भवनाधिवासितैः कुसुमैः ॥९६९॥

उत्कन्धरो नितविनिर्मलचारुपक्षो
हंसोऽयमत्र नभसीति जनैः प्रतीतः ।
गृह्णाति पल्वलजलाच्छफरीं यदासौ
ज्ञातस्तदा खलु बकोऽयमितीह लोकैः ॥९७०॥

हेलया राजहंसेन यत् कृत कलकूजितम् ।
न तद् वर्षशतेनापि जानात्याशिक्षितुं बकः ॥९७१॥

उष्ट्राणां च गृहे लग्न गर्दभाः शान्तिपाठकाः ।
परस्परं प्रशंसन्ति अहो रूपम् अहो ध्वनिः ॥९७२॥

कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र ।
प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥९७३॥

पिंडे पिंडे मतिर्भिन्ना कुंडे कुंडे नवं पयः ।
जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ॥ ९७४ ॥

यो न संचरते देशान् यो न सेवेत पंडितान् ।
तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवांभसि ॥ ९७५ ॥

यस्तु संचरते देशान् यस्तु सेवेत पंडितान् ।
तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवांभसि ॥ ९७६ ॥

यः पठति लिखति पश्यति परिपृच्छति पंडितानुपासयति ।
तस्य दिवाकरकिरणैर्नलिनीदलमिव विकास्यते बुद्धिः ॥९७७॥

एकेन राजहंसेन या शोभा सरसो भवेत् ।
न सा बकसहस्रेण परितस्तीरवासिना ॥ ९७८ ॥

यथा देशस्तथा भाषा यथा राजा तथा प्रजा ।
यथा भूमिस्तथा तोयं यथा बीजं तथांकुरः ॥ ९७९ ॥

स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ९८० ॥

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ ९८१ ॥

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥ ९८२ ॥

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ ९८३ ॥

वार्ता च कौतुकवती विमला च विद्या
लोकोत्तरः परिमलश्च कुरंगनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत् त्रय प्रसरति स्वयमेव लोके ॥ ९८४ ॥

केचिन्निद्रागताः केचित् कथयन्ति बहिर्गताः ।
केचिदन्तर्गताः केचिन्नो जाने क्व गता इति ? ॥ ९८५ ॥

बंधनानि खलु सन्ति बहूनि प्रेमरज्जुदृढबंधनमाहुः ।
दारुभेदनिपुणोऽपि षडंघ्रि-र्निष्क्रियो भवति पंकजकोषे ।९८६।

अर्थातुराणां न पिता न बंधुः, कामातुराणां न भय न लज्जा ।
क्षुधातुराणां न बल न तेज, चिंतातुराणां न सुखं न निद्रा ९८७

विशाखांत गता मेघाः प्रसवांत हि यौवनम् ।
प्रणामांतः सतां कोपो याचनांत हि गौरवम् ॥ ९८८ ॥

संग्रामे सुभटेंद्राणां कवीनां कविमंडले ।
दीप्तिर्वा दीप्तिहानिर्वा मुहूर्तादेव जायते ॥ ९८९ ॥

मौन कालविलंबश्च प्रयाणं भूमिदर्शनम् ।
भृकुट्यन्यमुखी वार्ता नकारः षड्विधः स्मृतः ॥ ९९० ॥

यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्यते ।
कुठारैर्दंण्डनिर्मुक्तैर्भिद्यते तरवः कथम् ? ॥ ९९१ ॥

यथा खरश्चदनभारवाही, भारस्य वेत्ता न तु चंदनस्य ।
तथा हि विप्रः श्रुतिशास्त्रपूर्णो, ज्ञानेन हीनः पशुभिः समानः ९९२

अन्तर्विशति मार्जारी शुनी वा गजवेश्मनि ।
बहिःस्थस्य गजेन्द्रस्य किमर्थः परिहीयते ॥ ९९३ ॥

सद्यः फलति गांधर्वं, मासमेकं पुराणकम् ।
वेदाः फलंति कालेषु, ज्योतिर्वैद्यं निरंतरम् ॥ ९९४ ॥

सहते शरशतघातानाजानेयः कशां नैव ।
सहते विपत्सहस्रं मानी नैवापमानलेशमपि ॥ ९९५ ॥

जानामि नागेन्द्र तव प्रभावं
कण्ठे स्थितो गर्जसि शंकरस्य ।
स्थानं प्रधानं न बलं प्रधानं
स्थानं स्थितः कापुरुषोऽपि शूरः ॥ ९९६ ॥

सत्सङ्गाद् भवति हि साधुता खलानां,
पंडितसाधूनां न हि खलसंगमात् खलत्वम् ।
आमोदं कुसुमभवं मृदेव धत्ते
मृद्गन्धं न हि कुसुमानि धारयन्ति ॥ ९९७ ॥

अजायुद्धमृषिश्राद्धं प्रभाते मेघडम्बरम् ।
दम्पत्योः कलहश्चैव परिणामे न किंचन ॥ ९९८ ॥

उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः ।
अधमा मातुलात् ख्याताः श्वशुराच्चाधमाधमाः ॥ ९९९ ॥

हस्तादपि न दातव्यं गृहादपि न दीयते ।
परोपकरणार्थाय वचने किं दरिद्रता ? ॥ १००० ॥

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥१००१॥

सुलभाः पुरुषा राजन् , सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य, वक्ता श्रोता च दुर्लभः ॥१००२॥

पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः ।
न पापफलमिच्छन्ति पाप कुर्वन्ति यत्नतः ॥ १००३ ॥

बालोऽपि चौर स्थविरोऽपि चौरः,
समागतः प्राघुर्णिकोऽपि चौरः ।
दिल्लीप्रदेशे मथुराप्रदेशे
चौरं विना न प्रसवन्ति नार्यः ॥ १००४ ॥

अनर्घमपि माणिक्यं हेमाश्रयमपेक्षत ।
विनाश्रय न शोभन्ते पण्डिता वनिता लता· ॥ १००५ ॥

गगनं गगनाकार सागर· सागरोपम· ।
रामरावणयोर्युद्ध रामरावणयोरिव ॥ १००६ ॥

कालो वा कारण वा राज्ञो राजा वा कालकारणम् ।
इति ते सशयो मा भूत् राजा कालस्य कारणम् ॥१००७॥

दृष्ट्वा यतिर्यतिं मयो वैद्यो वैद्यं नटं नटः ।
याचको याचक दृष्ट्वा श्वानवद् घुर्घुरायते ॥ १००८ ॥

आशा नाम मनुष्याणां काचिदाश्चर्यशृखला ।
यया बद्धाः प्रधावति मुक्तास्तिष्ठति पगुवत् ॥ १००९ ॥

शृगालोऽपि वने कर्ण शशैः परिवृतो वमन् ।
मन्यते सिंहमात्मान यावत् सिंह न पश्यति ॥ १०१० ॥

नमस्कारसहस्रेषु शाकपत्र न लभ्यते ।
आशीर्वादसहस्रेषु रोमवृद्धिर्न जायते ॥ १०११ ॥

सुभाषितेन गीतेन युवतीनां च लीलया ।
यस्य न द्रवते चित्त स वै मुक्तोऽथवा पशुः ॥ १०१२ ॥

क्षणशः कणशश्चैव विद्यामर्थं च चिंतयेत् ।
क्षणे नष्टे कुतो विद्या कणे नष्टे कुतो धनम्     ॥ १०१३ ॥
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ १०१४ ॥
तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबंधनात् ।
मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम्     ॥ १०१५ ॥
घटं भिन्द्यात् पटं छिन्द्यात् कुर्याद् वा रासभध्वनिम् ।
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत्     ॥ १०१६ ॥
शतं विहाय भोक्तव्यं सहस्रं स्नानमाचरेत् ।
लक्षं विहाय दातव्यं कोटिं त्यक्त्वा हरिं भजेत् ॥ १०१७ ॥
जिह्वे ! प्रमाणं जानीहि भोजने भाषणेऽपि च ।
अतिभुक्तिरतीवोक्तिः सद्यः प्राणापहारिणी     ॥ १०१८ ॥
अनुकूले विधौ देयं यतः पूरयिता प्रभुः ।
प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति     ॥ १०१९ ॥
स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः ।
इति विज्ञाय मतिमान् स्वस्थानं न परित्यजेत्  ॥ १०२० ॥
परिचरितव्याः संतो यद्यपि कथयंति नो सदुपदेशम् ।
यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि  ॥ १०२१ ॥
युद्धं च प्रातरुत्थानं भोजनं सह बंधुभिः ।
स्त्रियमापद्गतां रक्षेत् चतुः शिक्षेत कुक्कुटात्  ॥ १०२२ ॥
अव्याकरणमधीतं भिन्नद्रोण्या तरंगिणीतरणम् ।
भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम्  ॥ १०२३ ॥

क्षुरैः पदाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् ।
स्पर्धाऽपि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥ १०२४ ॥

दारेषु किंचित् स्वजनेषु किंचिद्
गोप्यं वयस्येषु सुतेषु किंचित् ।
युक्तं न वा युक्तमिदं विचिंत्य
वदेद् विपश्चिन्महतोऽनुरोधात् ॥ १०२५ ॥

पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥१०२६॥

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टनिपुष्टयोः ॥ १०२७ ॥

शनैः पन्थाः शनैः कन्थाः शनैः पर्वतमस्तके ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ १०२८ ॥

एकस्तपो द्विरध्यायी त्रिभिर्गीतं चतुः पथम् ।
सप्त पञ्च कृषीणां च संग्रामो बहुभिर्जनैः ॥ १०२९ ॥

श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना
नैको मुनिर्यस्य वचोऽप्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ १०३० ॥

अन्यैः साकं विरोधेन वयं पञ्चोत्तरं शतम् ।
परस्परविरोधेन वयं पञ्च च ते शतम् ॥ १०३१ ॥

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ॥ १०३२ ॥

यावज्जीवं सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ? ॥ १०३३ ॥

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयाद् एष धर्मः सनातनः ॥ १०३४ ॥

अलातं तिन्दुकस्येव मुहूर्त्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ १०३५ ॥

निर्वनो बध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद् व्याघ्रो वनं रक्षेद् वनं व्याघ्रं च पालयेत् ॥ १०३६ ॥

प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि ? ॥ १०३७ ॥

कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ १०३८ ॥

कमला कमले शेते हरिः शेते महोदधौ ।
हरो हिमालये शेते मन्ये मत्कुणशङ्कया ॥ १०३९ ॥

अस्माकं बदरीचक्रं युष्माकं बदरीतरुः ।
बादरायणसंबन्धात् यूयं यूयं वयं वयम् ॥ १०४० ॥

न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह ।
पयोऽपि शौण्डिनीहस्ते मदिरां मन्यते जनः ॥ १०४१ ॥

इतरपापफलानि यथेच्छया,
वितर तानि सहे चतुरानन ।
अरसिकेषु कवित्वनिवेदनं
शिरसि मा लिख मा लिख मा लिख ॥ १०४२ ॥

दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः ।
पाणौ पायसदग्धे तक्रं फूत्कृत्य बालकः पिबति ॥१०४३॥

अतिपरिचयादवज्ञा संततगमनादनादरो भवति ।
मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ १०४४॥

असारे खलु संसारे सारं श्वशुरमंदिरम् ।
हरो हिमालये शेते हरिः शेते महोदधौ ॥ १०४५ ॥

अगस्तितुल्याश्च घृताब्धिशोषणे
दम्भोलितुल्या वटकाद्रिभेदने ।
शाकावलीकाननवह्निरूपा
त एव भट्टा इतरे भटाश्च ॥ १०४६ ॥

भो भाद्रपक्ष सकलद्विजकल्पवृक्ष,
क्वास्मान् विहाय गतवानसि देहि वाचम् ।
डिण्डीरपिण्डपरिपाण्डुरवर्णभाजां,
लाभः कथं त्वयि गते घृतपायसानाम् ? ॥ १०४७॥

इह तुरगशतैः प्रयान्तु मूर्खाः,
धनरहिता विबुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः
पुलिनगतैर्न समत्वमेति हंसैः ॥ १०४८ ॥

पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन रोषाद्,
आबाल्याद् विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी मे ।
गेहं मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं,
तस्मात् खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥

हस्तमुत्क्षिप्य यातोऽसि बलात् कृष्ण किमद्भुतम् ?
हृदयाद् यदि निर्यासि पौरुषं गणयामि ते ॥ १०५० ॥

भकारो कुंभकर्णेऽस्ति भकारोऽस्ति विभीषणे ।
तयोर्ज्येष्ठे कुलश्रेष्ठे भकारः किं न वर्तते ॥ १०५१ ॥

क्वचिद् वीणावाद्यं क्वचिदपि च हाहेति रुदितम्
क्वचिद् विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।
क्वचिद् रम्या रामाः क्वचिदपि गलत्कुष्ठवपुषो
न जाने संसारः किममृतमयः किं विषमयः ? ॥१०५२॥

काक आह्वयते काकान् याचको न तु याचकान् ।
काकयाचकयोर्मध्ये वरं काको न याचकः ॥ १०५३ ॥

हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो
वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रः पविः ।
दीपे प्रज्वालिते विनश्यति तमः किं दीपमात्रं तमः
तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः॥१०५४॥

क्वचिद् भूमौ शय्या क्वचिदपि च पर्यङ्कशयनम्
क्वचिच्छाखाहारी क्वचिदपि च शाल्योदनरुचिः ।
क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥१०५५॥

अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम् ।
सद्भ्यो न रोचते साऽसंतोऽप्यस्यै न रोचन्ते ॥१०५६॥

वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं
वाक्पारुष्याच्चोपकारोऽपि नष्टः ।

किं तद्द्रव्य कोकिलेनोपनीतं
को वा लोके गर्दभस्यापराधः ॥ १०५७ ॥

ऊर्णां नैष बिभर्ति नैष विषयो दोहस्य वाहस्य वा,
तृप्तिर्नास्य महोदरस्य बहुभिर्घासैः पलालैरपि ।
हा कष्ट कथमस्य पृष्ठशिखरे गोणी समारोप्यते,
को गृह्णाति कपर्दकैरिममिति ग्राम्यैर्गजो हास्यते ॥१०५८॥

धनानि भूमौ पशवश्च गोष्ठे
भार्या गृहद्वारि जनः श्मशाने ।
देहश्चितायां परलोकमार्गे
कर्मानुगो गच्छति जीव एक ॥ १०५९ ॥

निर्वाणदीपे किमु तैलदान
चौरे गते वा किमु सावधानम् ।
वयोगते किं वनिताविलासः
पयोगते किं खलु सेतुबन्धः ॥ १०६० ॥

इयं सुदरी मस्तकन्यस्तकुंभा
कुसुमारुणं चारु चेल वसाना ।
समस्तस्य लोकस्य चेतःप्रवृत्तिं
गृहीत्वा घटे न्यस्य यातीव भाति ॥ १०६१ ॥

समत्वाकांक्षिणी भार्या विवादे ज्वररात्रभवत् ।
स्तन्यार्थे बालको गेहे रौति नाथोऽप्यनाथवत् ॥१०६२॥

चाचल्यमुच्चैःश्रवसस्तुरंगात्,
कौटिल्यमिंदोर्विषतो निर्मोहः ।

इति श्रियाऽशिधि सहोदरेभ्यो,
न वेद्मि कस्माद् गुणवद्विरोधः ? ॥१०६३॥

मान्धाता स महीपतिः कृतयुगालंकारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यांतकः ? ।
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते !
नैकेनापि समं गता वसुमती नूनं त्वया यास्यति ॥१०६४॥

एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥१०६५॥

अयश्चणकचर्वणं फणिफणामणेः कर्षणम्,
करेण करितालनं जलनिधेः पदा लंघनम् ।
प्रसुप्तहरिबोधनं निशितखड्गसंस्पर्शनम्
कदाचिदपि संभवेन्न कृपणस्य वित्तार्जनम् ॥१०६६॥

ग्रासोद्गलितसिक्थस्य का हानिः करिणो भवेत् ।
पिपीलिका तु तेनैव सकुटुंबाऽपि जीवति ॥ १०६७ ॥

अलंकरोति हि जरा राजामात्यभिषग्यतीन् ।
विडंबयति पण्यस्त्रीमल्लगायकसेवकान् ॥ १०६८ ॥

दूरस्थाः पर्वता रम्या वेश्या च मुखमंडने ।
युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥ १०६९ ॥

अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
सकलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ १०७० ॥

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत् कूपा वर्धन्ते विधुकान्तिभिः ॥ १०७१ ॥

तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १०७२ ॥

शिला बाला जाता चरणरजसा यत्कुलशिशोः
स एवायं सूर्यः सपदि निजपादैर्गिरिशिलाम् ।
स्पृशन् भूयो भूयो न खलु कुरुते कामपि वधूम्
कुले कश्चिद् धन्यः प्रभवति नरः श्लाघ्यमहिमा ॥१०७३॥

तृणादपि लघुस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामेव प्रार्थयेदिति ॥ १०७४॥

पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां
धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि ।
श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः
स्तोतव्यस्त्वं बधिर न गिरं यः खलानां शृणोषि ॥१०७५॥

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥ १०७६ ॥

शय्या वस्त्रं चन्दनं चारु हास्यं
वीणा वाणी सुन्दरी या च नारी ।
न भ्राजन्ते क्षुत्पिपासातुराणां
सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥ १०७७ ॥

आदौ रामतपोवनादिगमनं मायामृगोन्माथनं,
वैदेहीहरणं जटायुमरणं सुग्रीवसमाषणम् ।
वालिव्याहनन समुद्रतरणं लंकापुरीदाहनम्
पश्चाद् रावणकुंभकर्णहननं एतद्धि रामायणम् ॥१०७८॥

उच्चैरध्ययनं पुरातनकथा स्त्रीभिः सहालापनम्
तासामर्भकलालनं पतिनुतिस्तत्पाकमिथ्यास्तुतिः ।
आदेशस्य करावलम्बनविधिः पाण्डित्यलेखक्रिया
होरागारुडमंत्रतंत्रकविधीर्भिक्षागुणा द्वादश ॥१०७९॥

जटा नेयं वेणीकृतकचकलापो न गरलम्
गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर किं मां प्रहरसि ? ॥१०८०॥

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ १०८१ ॥

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १०८२ ॥

अभूत् प्राची पिङ्गा रसपतिरिव प्राश्य कनकम्
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
क्षणात् क्षीणास्तारा नृपतय इवानुद्यमपरा
न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥१०८३॥

सौमित्रिर्वदति विभीषणाय लंकां
देहि त्वं भुवनपते विनैव कोशम् ।
एतस्मिन् रघुपतिराह वाक्यमेतद्
विक्रीते करिणि किमंकुशे विवादः ॥ १०८४ ॥

आनन्दतांडवपुरे द्रविडस्य गेहे
चित्रं वसिष्ठवनितामममाज्यपात्रम् ।
विद्युल्लतेव परिनृत्यति तत्र दर्वी
धारा विलोकयति योगबलेन सिद्धः ॥ १०८५ ॥

नाह जानामि केयूरे नाहं जानामि कुण्डले ।
नूपुरे त्वभिजानामि नित्य पादाभिवन्दनात् ॥ १०८६ ॥

अस्य मूर्खस्य यागस्य दक्षिणा महिषीशतम् ।
त्वयार्धं च मयार्धं च विघ्न मा कुरु पण्डित ! ॥ १०८७ ॥

यदि नाम दैवगत्या, जगदसरोजं कदाचिदपि जातम् ।
अवकरनिकर विकिरति, तत् किं कृकवाकुरिव हसः ॥१०८८॥

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।
शुक पञ्जरबन्धस्ते मधुराणा गिरां फलम् । ॥ ११८९ ॥

स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः
कल्याणिनी भवतु मौक्तिकशुक्तिमाला ।
प्राप्त मया सकलमेव फलं पयोधे
यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ १०९० ॥

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमाश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्त
हतविधिलसितानां ह्री विचित्रो विपाकः ॥१०९१॥

मर्कटस्य सुरापान तस्य वृश्चिकदशनम् ।
तन्मध्ये भूतसचारो यद्वा तद्वा भविष्यति ॥१०९२॥

मार्गे मार्गे निर्मलं ब्रह्मवृन्दं
वृन्दे वृन्दे तत्त्वचिन्तानुवादः ।
वादे वादे जायते तत्त्वबोधो
बोधे बोधे भासते चन्द्रचूडः ॥ १०९३ ॥

चिकीर्षिते कर्मणि चक्रपाणे-
र्नापेक्षते तत्र सहायसंपत् ।
पाञ्चालजायाः पटसंविधाने
मध्येसभं यन्त्र तुरी न वेमा ॥ १०९४ ॥

पुष्पेषु चम्पा नगरीषु लङ्का
नदीषु गङ्गा च नृपेषु रामः ।
योषित्सु रंभा पुरुषेषु विष्णुः
काव्येषु माघः कविकालिदासः ॥ १०९५ ॥

गतास्ते दिवसा राजन् देवाः सेवानुवर्तिनः ।
दशानन दशां पश्य तरन्ति दृषदोऽम्भसि ॥१०९६॥

अग्रतश्चतुरो वेदाः पृष्ठतः सशरं धनुः ।
इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि ॥१०९७॥

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥१०९८॥

न तेन स्थविरो भवति येनास्य पलितं शिरः ।
बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः ॥११९९॥

भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥ ११०० ॥

तद्वै धनुस्त इषवः स रथो हयास्ते
सोऽहं रथी नृपतयो यत आनमन्ति ।
सर्वं क्षणेन तदभूदसदीशरिक्तम्
भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम् ॥ ११०१ ॥

स्त्रीणां स्पर्शात् प्रियंगुर्विकसति बकुलः सीधुगण्डूषमेकात्
पादाघातादशोकस्तिलककुरबकौ वीक्षणालिंगनाभ्याम् ।
मन्दारो नर्मवाक्यात् पटुमृदुहसनाचम्पको वक्त्रवातात्
चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात् कर्णिकारः॥११०२

तमाखुपत्र राजेन्द्र भज माज्ञानदायकम् ।
तमाखुपत्र राजेन्द्र भज माज्ञानदायकम् ॥ ११०- ॥

रामो राजमणिः सदा विजयते राम रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहम्
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥ ११०४ ॥

सीताचिन्ताकुले रामे निद्रा निरगमद् रुषा ।
कथमेकाकिनं जह्याम्, इत्येव न जहौ निशा ॥ ११०५ ॥

कः कौ के क कौ कान्, हसति हसतो हसन्ति तन्वग्याः ।
दृष्ट्वा पल्लवमधरो, पाणी पद्मे च कोरकान् दन्ताः ॥११०६॥

अकर्णमकरोच्छेष विधिर्ब्रह्माण्डभगधीः ।
श्रुत्वा रामकथा रम्या शिरः कस्य न कम्पते ॥ ११०७ ॥

सरसो विपरीतश्चेत् सरसत्वं न मुञ्चति ।
साक्षरा विपरीताश्चेद् राक्षसा एव केवलम् ॥ ११०८ ॥

मौखर्यं लाघवकरं मौनमुन्नतिकारकम् ।
मुखरं नूपुरं पादे कंठे हारो विराजते ॥ ११०९ ॥

यो वर्तते शुचित्वेन स वैश्वानर उच्यते ।
यो वर्ततेऽशुचित्वेन स वै श्वा नर उच्यते ॥ १११० ॥

राजंस्त्वत्कीर्तिचन्द्रेण तिथयः पौर्णिमाः कृताः ।
त्वद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥ ११११ ॥

यदि वा याति गोविंदो मथुरातः पुनः सखि ।
राधाया नयनद्वंद्वे राधानामाविपर्ययः ॥ १११२ ॥

निद्राप्रियो यः खलु कुंभकर्णो
हतः समीके स रघूत्तमेन ।
वैधव्यमापद्यत तस्य कान्ता
श्रोतुं समायाति कथां पुराणम् ॥ १११३ ॥

न संध्यां संधत्ते नियमितनिमाजान्न कुरुते
न वा मौञ्जीबन्धं कलयति न वा सौनतविधिम् ।
न रोजां जानीते व्रतमपि हरेर्नैव कुरुते
न काशी मक्का वा शिव शिव न हिंदुर्न यवनः॥१११४

खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चंद्रमाः ॥ १११५ ॥

सहसा विदधीत न क्रिया–मविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव संपदः॥१११६

सुखं हि दुःखान्यनुभूय शोभते, घनान्धकारेष्विव दीपदर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां, धृतः शरीरेण मृतः स जीवति

वाहने ये गुणाः प्रोक्तास्ते गुणाः कटिवंधने
निवाते ये गुणाः प्रोक्तास्ते गुणाः कर्णबंधने ।
लंघने ये गुणाः प्रोक्तास्ते गुणा लघुभोजने
व्यायामे ये गुणाः प्रोक्तास्ते गुणा प्राणधारणे ॥१११८॥

धनुषि धनुराकारः मकरे कुंडलाकृति ।
कूर्मे शीतमशीतं वा मीने शीतनिवारणम् ॥ १११९ ॥

मज्जन्ति मुनयः सर्वे त्वमेक किं न मज्जसि ।
भवे त्वद्दर्शनाद् मुक्तिः न जाने स्नानज फलम् ॥११२०॥

विद्या मित्र प्रवासेषु भार्या मित्र गृहेषु च ।
व्याधितस्यौषध मित्रं धर्मो मित्र मृतस्य च ॥११२१॥

गुणो भूषयते रूप शील भूषयते कुलम् ।
शान्तिर्भूषयते विद्या दान भूषयते धनम् ॥ ११२२ ॥

अतिदानाद् बलिर्बद्धो ह्यतिदर्पात् सुयोधनः
विनष्टो रावणो लोभादति सर्वत्र वर्जयेत् ॥ ११२३ ॥

वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् ।
वृथा दानं समर्थेभ्यो वृथा दीपो दिवाऽपि च ॥११२४॥

शोभते विद्यया विप्रः क्षत्रियो विजयेन च ।
अर्थः पात्रे प्रदानेन लज्जया च कुलाङ्गना ॥ ११२५ ॥

सौवर्णानि सरोजानि निर्मातु सन्ति शिल्पिनः ।
तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ ११२६ ॥

प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः
त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ ११२७ ॥

हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् ।
श्रोत्रस्य भूषणं शास्त्रं भूषणैः किं प्रयोजनम् ॥११२८॥

नरस्याभरणं रूपं रूपस्याभरणं गुणाः ।
गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ ११२९ ॥

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
बकास्तु नैव बध्यन्ते मौनं सर्वार्थसाधनम् ॥ ११३० ॥

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे ।
पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ ११३१ ॥

एकोऽपि गुणवान् पुत्रो निर्गुणैः किं शतैरपि ।
एकश्चन्द्रो जगन्नेत्रं नक्षत्रैः किं प्रयोजनम् ॥ ११३२ ॥

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ११३३ ॥

अन्नदानं महादानं विद्यादानं महत्तरम् ।
अन्नेन क्षणिका तृप्तिर्यावज्जीवं तु विद्यया ॥ ११३४ ॥

कवयः किं न पश्यन्ति किं न खादन्ति वायसाः
मद्यपाः किं न जल्पन्ति किं न कुर्वन्ति दुर्जनाः ॥११३५॥

जनिता चोपनेता च विद्यायाश्च प्रदायकः ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ११३६ ॥

पादपानां भयं वातात् पद्मानां शिशिराद् भयम् ।
पर्वतानां भयं वज्राद् साधूनां दुर्जनाद् भयम् ॥११३७॥

उद्योगः खलु कर्तव्यः फलं मार्जारवद् भवेत् ।
जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥११३८॥

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ११३९ ॥
दरिद्रोऽपि नरो नून तमाखु नैव मुञ्चति ।
निवारितोऽपि मार्जारस्तमाखुं नैव मुञ्चति ॥ ११४० ॥
धीराणां भूषणं विद्या मन्त्रिणा भूषणं नृपः
भूषणं च नयो राज्ञां शील सर्वस्य भूषणम् ॥ ११४१ ॥
पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलम् ।
तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ ११४२ ॥
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपान भुजङ्गाना केवलं विषवर्धनम् ॥ ११४३ ॥
वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता ।
निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम् ॥ ११४४ ॥
सर्पदुर्जनयोर्मध्ये वर सर्पो न दुर्जनः ।
सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ ११४५ ॥
खलः करोति दुर्वृत्तं नून फलति साधुषु ।
दशाननोऽहरत् सीतां बन्धं प्राप्तो महोदधिः ॥ ११४६ ॥
यथाऽऽमिषं जले मत्स्यैर्भक्ष्यते श्वापदै स्थले ।
आकाशे विहगैश्चैव तथा सर्वत्र वित्तवान् ॥ ११४७ ॥
जायते नरकः पापात् पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद् दानपरो भव ॥ ११४८ ॥
दरिद्रान् भर कौन्तेय मा यच्छ प्रभवे धनम् ।
व्याधितस्यौषध पथ्यं नीरुजस्य किमौषधैः ॥ ११४९ ॥

मातरं पितरं पुत्रं भ्रातरं बान्धवानपि ।
लोभाविष्टो नरो हन्ति स्वामिनं वा सुहृत्तमम् ॥ ११५० ॥

निर्विषेणापि सर्पेण कर्तव्या महती फटा ।
विषं भवतु वा मा वा फटाटोपो भयङ्करः ॥ ११५१ ॥

नष्टं नैव मृतं चैव नाऽनुशोचन्ति पण्डिताः ।
पण्डितानां जडानां च विशेषोऽयमतः स्मृतः ॥ ११५२ ॥

धनिकः श्रोत्रियो राजा नदी वैद्यस्तथैव च ।
पञ्च यत्र न विद्यन्ते मा तत्र दिवसं वस ॥ ११५३ ॥

ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
पुनः पुनः प्रवर्तन्ते तस्माच्छेषं विनाशय ॥ ११५४ ॥

सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशः सुदुःसहः ॥ ११५५ ॥

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ११५६ ॥

विद्या विनयोपेता, हरति न चेतांसि कस्य मनुजस्य ।
काञ्चनमणिसंयोगो, नो जनयति कस्य लोचनानन्दम् ॥ ११५७

इच्छति शती सहस्रं, ससहस्रः कोटिमीहते कर्तुम् ।
कोटियुतोऽपि नृपत्वं, नृपोऽपि बत चक्रवर्तित्वम् ॥ ११५८ ॥

अङ्गं गलितं पलितं मुण्डं
दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं
तदपि न मुञ्चत्याशापिण्डम् ॥ ११५९ ॥

विदेशेषु धन विद्या व्यसनेषु धन मतिः ।
परलोके धनं धर्मः शील सर्वत्र वै धनम्     ॥ ११६० ॥
लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥११६१॥
चमा बलमशक्ताना शक्ताना भूषण चमा ।
क्षमया जीयते लोकः चमया किं न सिद्ध्यति ॥ ११६२ ॥
दुर्बलस्य बल राजा बालानां रोदन बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम्     ॥ ११६३ ॥
उपकारः परो धर्म परार्थकर्म नैपुणम् ।
पात्रदानं परं सौख्य परो मोचो वितृष्णता     ॥ ११६४ ॥
दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जर ।
श्यालको गृहनाशाय सर्वनाशाय दुर्जनः     ॥ ११६५ ॥
उदारस्य तृण वित्त शूरस्य मरण तृणम् ।
विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ ११६६ ॥
जननी जन्मभूमिश्च जाह्नवी च जनार्दनः ।
जनक पञ्चमश्चैव जकाराः पञ्च दुर्लभाः     ॥ ११६७ ॥
सत्येन धार्यते पृथ्वी सत्येन तपते रवि ।
सत्येन वहते वायुः सत्यं सर्वस्य कारणम्     ॥ ११६८ ॥
किं कुलेन विशालेन शीलमेवात्र कारणम् ।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु     ॥ ११६९ ॥
कुस्थानस्य प्रवेशेन गुणवानपि पीड्यते ।
वैश्वानरोऽपि लोहस्थोऽयस्कारैरभिहन्यते     ॥ ११७० ॥

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
तीर्थं फलति कालेन सद्यः साधुसमागमः ॥ ११७१ ॥
शुचित्वं त्यागिता शौर्यं समत्वं सुखदुःखयोः ।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ११७२ ॥
एकेन शुष्कवृक्षेण दह्यमानेन वह्निना ।
दह्यते काननं सर्वं दुष्पुत्रेण कुलं तथा ॥ ११७३ ॥
नास्ति क्षुधासमं दुःखं क्षुधा प्राणापहारिणी ।
नास्त्याहारसमं सौख्यमाहारः प्राणरक्षकः ॥ ११७४ ॥
मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः ।
अलसस्य कुतो विद्या निर्धनस्य कुतः सुखम् ॥ ११७५ ॥
सर्पाणां च खलानां च परद्रव्यापहारिणाम् ।
मनोरथा न सिध्यन्ति तेनेदं वर्तते जगत् ॥ ११७६ ॥
नास्ति विद्यासमं नेत्रं नास्ति सत्यसमं तपः ।
नास्ति लोभसमं दुःखं नास्ति त्यागसमं सुखम् ॥११७७॥
पण्डिते चैव मूर्खे च बलवत्यबलेऽपि च ।
सधने निर्धने चैव मृत्योः सर्वत्र तुल्यता ॥ ११७८ ॥
मातृवत् परदारेषु परद्रव्येषु लोष्ठवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ ११७९ ॥
राजपत्नी गुरोः पत्नी भ्रातृपत्नी तथैव च ।
पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः ॥ ११८० ॥
ज्ञातिभिर्भज्यते नैव चौरेणापि न नीयते ।
दानेन न क्षयं याति विद्यारत्नं महाधनम् ॥ ११८१ ॥

